सप्तमवर्षम्, प्रथमाङ्कः १९९१, फर्वरी

# लोकसंस्कृतम्

(त्रैमासिकपत्रिका)

दिव्या संस्कृतभारती सुमहिता स्याद् राष्ट्रभाषापदे
वाग् मातुः सफलीभवेद् द्रुतमियं भव्ये भविष्येऽन्तिके ।
तेनाविष्कृतमत्र संस्कृतगिरो रूपं सुबोधं बुधा
लोके राजतु लोकसंस्कृतमिदं त्रैमासिकं शाश्वतम् ।।

संस्कृतकार्यालयः, श्रीअरविन्दाश्रमः, पुदुच्चेरी–605 002

# विषयसूची



---


**प्रकाशकः**—हरिकान्त सी. पटेलः, प्रकाशनविभागः, श्रीअरविन्दाश्रमः, पुदुच्चेरी ।

**सम्पादकाः**—जगन्नाथो वेदालङ्कारः, उषा देसाई, वि० ललित' नरेन्द्रश्च ।

वार्षिक-शुल्कम् रू. १५.००, आजीवन-शुल्कम् (विंशतिवर्षपर्यन्तम्) रू. २५०.०० ।

**प्रकाशनकालः**—फर्वरी २१, मई १५, अगस्त १५, नवाम्बर २४ ।

**मुद्रकः**—अमियरञ्जन-गाङ्गुलिः, श्रीअरविन्दाश्रम-मुद्रणालयः, पुदुच्चेरी ।

The Sanskrit ought to be the national language of India

Blessings

संस्कृतं भारतस्य राष्ट्रभाषा भवेत् ।

मम आशिषः

१९.४.१९७१ — श्रीमाता

# बलीवर्दः कुतः हलं कर्षति ?

अधुना खाद्याभाव. भवति । बहुजनाः भोजनं न प्राप्नुवन्ति । अनेकजनाः भोजनं विना म्रियन्ते । अस्य कारणं जानासि ? शृणु एका लघुकथाम् ।

बहुवर्षेभ्यः पूर्वं यदा भगवान् पृथिव्यां मनुष्यम् अरचयत् तदा सः गाम्, षण्डम् अपि अरचयत् । एकदा एकः षण्डः शिवस्य वाहनं नन्दिनामकं वृषभं द्रष्टुं कैलासपर्वतं गतः । नन्दी तस्य अतीव प्रियमित्रम् आसीत् । यदा स गच्छति स्म तदा एकः मनुष्यः तस्य पार्श्वम् आगत्य अवदत् — "अयि भोः षण्ड ! मया श्रुतं यत् त्वं कैलासं गच्छसि स्वबन्धुं द्रष्टुम् ।" "आम्, नन्दी मम प्रियमित्रम् । तं द्रष्टुं गच्छामि ।" "तर्हि महादेवं मदर्थे किञ्चित् प्रक्ष्यसि ?" षण्डः अवदत् — "किं पृच्छेयम् ?" मनुष्यः अकथयत् — "तं केवलम् एतदेव पृच्छ यत् मनुष्येण कतिवारं खादितव्यं कतिवारं च स्नातव्यम् ?" "अस्तु, अहं पृष्ट्वा त्वां सूचयिष्यामि" इति कथयित्वा षण्डः गतः । कैलासं गत्वा सः महादेवम् अपृच्छत्, "देवदेव, नमस्ते । पृथिव्यां कोऽपि मनुष्यः पृच्छति, 'अहं कतिवारं खादेयं कतिवारं च स्नानं कुर्याम्' इति ।" महादेवः अवदत्, "मनुष्यः दिने त्रिवारं स्नानं कुर्यात् एकवारं च खादेत् ।" महादेवं नमस्कृत्य षण्डः नन्दिना सह बहुकालम् आलपत्, तेन सह आनन्देन भोजनम् अकरोत् ।

यदा सः पृथिवीम् आगतः तदा महादेवस्य वचनं तस्य विस्मृतम् आसीत् । सः मनुष्यम् अवदत् — महादेवः कथयति, "दिने त्रिवारं भोजनं कर्तव्यम् एकवारं च स्नानम् ।" "अस्तु" इति कथयित्वा मनुष्यः त्रिवारं भोजनम् एकवारं स्नानं च कर्तुम् आरभत । अन्येऽपि तदेव अकुर्वन् ।

कतिचिद्-दिनेभ्यः परं महादेवः उपरिष्टात् अपश्यत् — मनुष्याः त्रिवारं खादन्ति एकवारं च स्नान्ति । तदा क्रुद्धः सः षण्डं कैलासे आहूय अवदत् — "अरे मूढमते ! त्वया किं कृतम् ? विपरीतं कथितम् ! तव प्रमादात् पृथिव्यां भोजनं शीघ्रं समाप्तं भविष्यति । तुभ्यं दण्डः दातव्यः । गच्छ, मनुष्यस्य कृते क्षेत्रेषु हलं कर्ष । तव पत्नी गौः अपि मनुष्याय दुग्धं ददातु ।" महादेवस्य आदेशात् षण्डः मनुष्याय हलं कर्षति गौश्च तस्मै दुग्धं ददाति । तथापि पृथिव्यां खाद्याभावः न दूरीभवति ।

— राधिकारञ्जनः

# सत्सङ्गः करणीयः

गङ्गानीरतरङ्गसङ्गविमलो वायुः प्रमोदावहो
दावाग्नौ विचरन् भवत्यतिशयोत्तप्तः स दुःखप्रदः ।
पुष्पोद्यानसमाश्रयेण सुरभिः शीतानिलो हर्षदो
दुर्गन्धं तनुते श्मशानमलतो लोके गुणाः सङ्गजाः ॥

संसर्गो यादृशो यस्य जायते तादृशो गुणः ।
सत्सङ्गः करणीयो हि दुःसङ्गो न कदाचन ॥

ॐ शान्तिः ! शान्तिः ! ! शान्तिः ! ! !

—श्रीगङ्गाधरगुरुः

# भूतभवनम्

आसीत् कश्चित् ग्रामः। ग्रामात् किञ्चिद् दूरे एकं विशाल भवनम् आसीत्। तत्र कोऽपि धनिकः वसति स्म। अधुना तत् जनशून्यम्। ग्रामवासिनः कथयन्ति — तत्र भूतः अस्ति।

एकदा द्वौ वृद्धौ अचिन्तयताम् — आवयोः मरणं तु निकटे एव। कुतः विशालभवने न म्रियेवहि? आगामिदिने तौ तत्र गतौ। प्रथमदिने रात्रौ तौ "अहं दातुम् इच्छामि, अहं दातुम् इच्छामि" इति शब्दम् अशृणुताम्। तौ आश्चर्यान्वितौ, किन्तु न भयभीतौ। इत्थं प्रतिरात्रं शब्दः अभवत्। एकदा एकः वृद्धः अवदत् — "यदि दातुम् इच्छसि, देहि, अधुनैव देहि।"

सहसा तयोः सम्मुखे एकः विशालः घटः आविर्भूत। वृद्धौ विस्मितौ। घटस्य अभ्यन्तरे मौक्तिकानि, रत्नानि सुन्दराणि वस्त्राणि च आसन्।

वृद्धौ अतीव आनन्दितौ। मृत्युपर्यन्तं तौ तत्र सुखेन अवसताम्। भूतोऽपि मुक्तिं प्राप्नोत्।

— अमलः

# कथं घोटकाः सेवकाः जाताः?

कश्चिद् घोटकः कस्मिन्नपि क्षेत्रे आनन्देन घासं चरति स्म। तत्र कोऽपि हरिणः आगतः। सुस्वादुघासं चरितुं सः क्षेत्रं प्राविशत्। तदा क्रुद्धः घोटकः चीत्कुर्वन् अवदत्, "हे मूर्ख, न जानासि? एतत् मम क्षेत्रम्। अपेहि। एतत् तव भोजनस्य स्थानं नास्ति।" हरिणः स्वतीक्ष्णशृङ्गद्वयं दर्शयन् अवदत्, "मा प्रलप घोटक! अहम् अत्र घासं खादिष्यामि एव। यदि किमपि करोषि, अहं तव मृत्युकारणं भविष्यामि।" एतत् श्रुत्वा घोटकः भयभीतः। सः व्याघ्रस्य साहाय्यं प्रार्थयत। व्याघ्र. अकथयत्, "अहं कथं तं मारयेयम्? स तु अतिवेगेन धावति।" तदा घोटकः कमपि मनुष्यं प्रार्थयत। मनुष्योऽपि व्याघ्रवत् उत्तरम् अददात्। तदा घोटकः अकथयत्, "मित्र! चिन्तां मा कुरु। अहं तव साहाय्यं कर्तुम् इच्छामि। हरिणमांसम् अतिमधुरम्। त्वं हरिणमांसं प्राप्स्यसि, अहं सुस्वादुघासं चरिष्यामि। द्वयोः उपकारः भविष्यति। आगच्छ, मम पृष्ठे उपविश।" मनुष्य. घोटकस्य पृष्ठे उपविश्य, क्षेत्रं गत्वा हरिणम् अमारयत्। अथ घोटकः अवदत्, "धन्यवादाः मित्र! हरिणं गृहीत्वा गृहं गच्छ। अहम् अद्य उदरपूरं घासं खादिष्यामि।" मनुष्यः अवदत्, "खाद बन्धो! सन्तोषेण खाद! अहम् अत्रैव प्रतीक्षे। अहं तव पृष्ठे उपविश्य एव गृहं गमिष्यामि। त्वम् अतीव उपकारी। अहं तव साहाय्यं प्रतिदिनम् इच्छामि। यदि मया सह न गच्छसि, पश्य इमां भुशुण्डीम्, त्वाम् अपि मारयिष्यामि।" वराकः घोटकः मनुष्येण सह तस्य गृहम् अगच्छत्। तत्परं सर्वेऽपि घोटकाः क्रमशः मनुष्याणां सेवकाः अभवन्।

— अनिर्वाणः

# तृणावर्तवधः

श्रीकृष्ण. अतिलघु. आसीत् । सः शिशुरेव आसीत् । एकदा तस्य माता तं क्रोडे धृत्वा गृहस्य वरण्डे सूर्यस्य आतपे उपविष्टा आसीत् । यशोदा श्रीकृष्ण क्रोडे धरति, हस्ताभ्या धरति, दोलयति, कदाचित् तम् उपरि क्षिपति, पुन धरति । श्रीकृष्णः प्रसन्न हसति । माता अपि हसति । हठात् माता अनुभवति — अरे मम पुत्र· कथं भारी भवति ! किम् एषा मम कल्पना ? कथ मम हस्तौ क्लान्तौ ? नहि, नहि, असम्भवम् । अह प्रतिदिनं कृष्ण धरामि । मम हस्तौ कदापि क्लान्तौ न भवत । अद्य कथ तौ क्लान्तौ ?

माता कृष्ण पश्यति, हस्तेन तम् उत्तोलयति, दोलयति, पुन. अन्यहस्तेन उत्तोलयति, दोलयति । सत्यमेव श्रीकृष्णः भारी भवति । यशोदामातुः हस्ते अधुना कष्टं भवति । सा शिशुकृष्णम् एकस्मिन् हस्ते धर्तुं न शक्नोति, द्वयोः हस्तयोः अपि धर्तुं न शक्नोति, उत्तोलयितुं न शक्नोति, दोलयितु न शक्नोति । सा श्रीकृष्णं क्रोडे स्थापयति । तत्रापि स· अधिकाधिकं भारी भवति । आश्चर्यम् ! कथं मम लघुशिशुः तथा भारी भवति ! क्रोडेऽपि अहं कष्टम् अनुभवामि इति यशोदा वदति ।

सा श्रीकृष्णं पश्यति । श्रीकृष्णः आनन्देन हसति, खेलति, हस्तपादं वायौ क्षिपति । किन्तु माता यशोदा अनुभवति — श्रीकृष्णः अधिकाधिकं भारी भवति । तस्य कारणं सा ज्ञातु न शक्नोति । तस्याः क्रोडे बहुव्यथा भवति, भृशं कष्टं भवति । सा शिशुकृष्णं क्रोडात् भूमौ स्थापयति । श्रीकृष्णः हसति । माता पश्यति — कड् कड् कड् इति शब्दं कृत्वा भूमिष्ठाः प्रस्तराः त्रुटिताः भवन्ति । श्रीकृष्णस्य भारेण ते खण्डिताः, चूर्णिता· ।

माता एतत् दृष्ट्वा आश्चर्येण धावति, सर्वान् आह्वयति — आगच्छत, पश्यत, अत्र किं भवति ! यदा माता ततः गता तदा प्रचण्डवायु· सूसूशब्दं कृत्वा वहति, हू हू हूश् कृत्वा शिशुकृष्णम् उत्तोलयति, उपरि नयति । वायुः घूर्णते, घूर्णते, घूर्णते; उपरि, उपरि आरोहति । श्रीकृष्णोऽपि वायुना सह घूर्णते, घूर्णते, उपरि उपरि च गच्छति ।

अपि जानासि सः वायुः कः आसीत् ? सः आसीत् एकः राक्षसः । आम्, स. आसीत् एक प्रकाण्ड·, बलवान् राक्षसः । नाम तस्य तृणावर्त. । राक्षसराजः कस. तम् अकथयत् — "तृणावर्त, त्वं गोपपुरं गच्छ । तत्र महाराजनन्दस्य गृहम् अस्ति । तस्य एकः शिशुपुत्रः अस्ति । नाम तस्य कृष्णः । तं मारय, कथमपि मारय । त्व वायु. भूत्वा तम् उपरि नय, परं नीचैः क्षिप । किन्तु सावधानः भव । सः लघुशिशु. बहुराक्षसान् मारितवान् । अतिचतुरः स·, अतिबुद्धिमान् ।"

तृणावर्तः हसन् कसं वदति — "महाराज, तृणावर्तः न सामान्यः राक्षस. । तं लघुशिशुम् अह सुखेन मारयितुं शक्नोमि ।" एतत् कथयित्वा सः गोकुलम् आगच्छति । सः पश्यति — लघुशिशुः कृष्णः लेटचन् खेलति, हसति । तदा सः वायुः भवति । प्रचण्डवेगेन हूश् श् श् कृत्वा श्रीकृष्णम् उपरि आकाशं नयति । आकाशे सः उच्चैः हसति वदति च — "अयं लघुशिशुः मां मारयिष्यति ? अयं सः कृष्णः यः राक्षसान् मारयति ? अद्य सः तृणावर्तस्य हस्ते पतितः । अद्य मम हस्तात् तस्य मुक्ति· नास्ति । अहं वेगेन उपरि गत्वा तं नीचै

क्षेप्स्यामि । तदा तस्य नामापि अवशिष्टं न स्थास्यति ।" तृणावर्तः पुनः हसति । श्रीकृष्णोऽपि हसति । पर तृणावर्त अनुभवति — श्रीकृष्णः भारी भवति । सोऽपि यशोदामाता इव चिन्तयति — "कथम् एष भारी भवति ? अपि एष सत्यमेव भारी भवति अथवा अहम् एवं चिन्तयामि ?" किन्तु श्रीकृष्ण सत्यमेव भारी भवति ।

श्रीकृष्ण· यथा यथा अधिकाधिकं भारी भवति तथा तथा तृणावर्तस्य हस्तयोः कष्ट वर्धते । सः अधुना श्रीकृष्ण हस्तयो धर्तु न शक्नोति । बलवान् राक्षस स लघुशिशु धरन् क्लान्त । सः श्रीकृष्णम् उत्तोल्य स्कन्धे उपवेशयति, श्रीकृष्णः तस्य स्कन्धं त्यक्त्वा गले उपविशति । तस्य वामटङ्गा तृणावर्तस्य वामस्कन्धात् लम्बते, दक्षिण-टङ्गा दक्षिणस्कन्धात् । श्रीकृष्णः द्वाभ्यां हस्ताभ्यां तस्य केशान् धरति । राक्षसः प्रचण्डवेगेन उपरि गच्छति । श्रीकृष्णः अधिकाधिकं भारी भवति । अत तृणावर्त आकाशे उपरि गन्तु न शक्नोति । तस्य गतिः मन्दीभवति । स. श्रीकृष्णं स्कन्धात् उत्तोल्य नीचै क्षेप्तुं चेष्टते । किन्तु श्रीकृष्णः किं करोति जानासि ? सः टङ्गाद्वय तृणावर्तस्य कण्ठे पाशयति, रज्जुवत् पाशयति — वामटङ्गां कण्ठस्य दक्षिणपार्श्वे भुजति दक्षिणटङ्गां च वामपार्श्वे । मध्ये तृणावर्तस्य कण्ठः । अधुना तृणावर्तः श्वसितुं न शक्नोति । श्रीकृष्णस्य लघुपादद्वयं तस्य कण्ठे भारिप्रस्तरवत् लम्बते । सः श्रीकृष्ण वोढुं न शक्नोति, पातयितुम् अपि न शक्नोति ।

अथ श्रीकृष्णः हस्ताभ्यां राक्षसस्य केशान् कर्षति, मस्तके मुष्टिप्रहारं करोति । प्रत्येकप्रहारेण तृणावर्त· रक्त वमति । सः दुर्बलः भवति । तस्य मस्तकं घूर्णते, नेत्रे घूर्णेते । तस्य दृष्टि. धूमला भवति । स सम्यक् द्रष्टुं न शक्नोति, अत्र तत्र रक्त वमति । सः श्वसितुम् अपि न शक्नोति यतो हि तस्य कण्ठ. रुद्ध । अधुना तस्य गतिः अतीव मन्दा । प्रचण्ड वायुवेगः समाप्तः । सः उच्चैः चीत्कर्तुम् अपि न शक्नोति ।

तृणावर्तः आकाशे मृतः । उपरिष्टात् सः भूमौ पतति । तदा प्रचण्डः शब्दः भवति । सर्वे चिन्तयन्ति—भूमिकम्पः आरब्धः । ते धावन्तः अत्र तत्र गच्छन्ति । केचन आगत्य पश्यन्ति — कोऽपि प्रकाण्डः, भयङ्करः राक्षसः मृतः । तस्य मुखात् रक्तं निर्गच्छति । निकटे शिशुकृष्णः हस्तपादम् इतस्ततः क्षिपन् आनन्देन खेलति । माता यशोदा आगत्य श्रीकृष्णं हस्ताभ्याम् उत्तोलयति । अधुना श्रीकृष्णः भारी नास्ति । यशोदामाता आनन्दिता ।

— राधिकारञ्जनः

पृथिव्या जीवनं खलु प्रगतेः क्षेत्रम् । किन्तु या सर्वाङ्गीणप्रगति. सम्पादनीया तदर्थं जीवनं कियत् अल्पम् !

क्षुद्रकामनावासनानां पूर्तौ समयस्य नाशः घोरमूर्खता एव । यथार्थसुखं भगवत्प्राप्ते परमेव सम्भवति ।

—श्रीमाता

# शिष्यस्य अद्भुतपरीक्षा

एकदा समर्थस्वामि-रामदासस्य कश्चित् शिष्यः अवदत् —"शिवमहाराजे एव गुरुदेवस्य विशेषकृपा वर्तते ।"

अन्यः शिष्यः अब्रवीत् — "तथैव भवितव्यम् । राजमहाराजा एव कृपापात्रताधिकारिणः ।"

शिष्ययोः इमे वचने समर्थस्वामि-रामदासस्य कर्णौ अपि प्रविष्टे । तस्मिन् दिने एकान्ते जङ्गले सत्सङ्गसमारोहस्य निश्चय. अभवत् । यदा समर्थस्वामि - रामदासः शिष्यमण्डलीसहितः सत्सङ्गस्य निश्चितस्थानं प्राप्नोत् तदा सहसा स उदरे भयङ्कर-पीडाव्याजेन गुहायां लेटचन् आक्रोष्टुम् आरभत ।

दर्शनार्थमागतः शिवमहाराजः गुरुचरणयोः शिरः नमयित्वा उदरशूलस्य कारणम् अपृच्छत् । गुरुदेवः आक्रोशन् अब्रवीत् — "तीव्रवेदना वर्तते ।"

"अस्या ओषधिः ?" शिवः करबद्धः अपृच्छत् ।

गुरुः अब्रवीत् — "अस्या एका एव अमोघा ओषधिः, किन्तु सा दुष्प्राप्या, अतः अलं चिन्तया ।"

शिवः प्रार्थयत — "भवान् निःसङ्कोचं वदतु, अहम् अवश्यम् आनेष्यामि ।"

समर्थस्वामी — "सिह्याः सद्यस्कं दुग्धम्... कथम् आनेतुं शक्ष्यसि ?"

शिवः किमपि उत्तरं न दत्त्वा गुरोः कमण्डलुं गृहीत्वा द्रुतवेगेन जङ्गलं प्रविष्टः । अतिदूरं गत्वा सः अपश्यत् — एका सिंही स्वनवजातशिशु लेढि, द्वितीयः शावकः किञ्चिद् दूरे खेलति । मनुष्यं स्वं प्रति आगच्छन्तं दृष्ट्वा सा क्ष्वेडं कुर्वती तस्मिन् सहसा आक्रामत् । शिवमहाराजः धैर्यपूर्वकं गुरुं स्मरन् सिह्यां समीपम् आगतायां बद्धाञ्जलिः अब्रवीत् — "मातः ! मम गुरुदेवः भयङ्करोदर-पीडया ग्रस्तः । तव दुग्धेन तस्य पीडा शान्ता भविष्यति, अहं त्वां हन्तु न आगतः ।"

महद् आश्चर्यम् ! सिंही पालितपशुवत् पुच्छं चालयितुम् आरभत । सा शिवस्य ममतामयीं मूकभाषाम् अबोधत् !! तस्याः पृष्ठं प्रेम्णा, मृदुलं परामृश्य शिवः कमण्डलौ दुग्धं दुग्धवान् ।

समर्थगुरुदेवस्य उदरपीडा तु लीलामात्रम् आसीत् । शिष्यवर्गस्य भ्रमः दूरीकरणीयः अभूत् । शिवः यदा दुग्धं गृहीत्वा तत्र प्राप्तः तदा गुरुदेवः प्रेम्णा अवदत् — "शिब्बा ! प्राणेषु कण्ठगतेष्वपि त्वम् आनीतवानेव सिंहीदुग्धम् ! त्वयि गते एव उदरशूलं तु शान्तम् अभवत्, वृथा एव कष्टं सोढं त्वया वत्स ! धन्या तव गुरुभक्ति. !"

शिवः अस्य किम् उत्तरं दद्यात् ? विनतः तूष्णीम् अतिष्ठत् । समर्थगुरुदेवस्य मर्मभेदिनी तीव्रदृष्टिः शिष्यमण्डलस्य मर्मस्थलं व्यद्धुम् आरभत । समर्थगुरुदेवस्य शिवमहाराजे ईदृशी अपारकृपादृष्टिः कुतः अस्ति इति शिष्यमण्डली अबोधत् ।

— जगन्नाथः

# कर्णस्य दानशीलता

एकदा श्रीकृष्णः पाण्डवानां सम्मुखे कर्णस्य दानशीलतायाः प्रशंसाम् अकरोत्। अर्जुनाय इद न अरोचत। अर्जुनस्य दृष्ट्यां धर्मराजः युधिष्ठिर एव सर्वोत्तमः दानशीलः। श्रीकृष्णः अर्जुनाय कर्णस्य दानशीलतायाः परिचयं दातुं निश्चयम् अकरोत्।

श्रीकृष्णः ब्राह्मणस्य वेशं धृत्वा पाण्डवानां राजसदनं गत्वा अवदत्—"हे राजन्! अहं स्वहस्तेन भोजनं पचामि। कृपया शुष्कं चन्दनकाष्ठं दीयता येन अहं भोजनं पक्तुं शक्नुयाम्।"

तत्समये धारासम्पातेन वृष्टिः भवति स्म। युधिष्ठिरः राजभवने अपृच्छत्। तत्र शुष्कं चन्दनकाष्ठम् उपलब्धं नासीत्। सेवकाः नगरे अन्वेषणम् अकुर्वन्। तत्र केवलम् आर्द्रचन्दनकाष्ठम् एव उपलभ्यते स्म। धर्मराजः अतीव दुःखितः अनन्योपायश्च।

तस्मिन् एव वेशे श्रीकृष्णः अर्जुनेन सह कर्णस्य राजप्रासादम् अगच्छत्। तत्र सः तामेव प्रार्थनां कर्णाय न्यवेदयत्। राजप्रासादे शुष्कं चन्दनं नास्ति, नगरेऽपि न उपलभ्यते इति सेवकेभ्यः श्रुत्वा कर्णः स्वधनुषि प्रत्यञ्चाम् आरोपयत्। राजप्रासादस्य द्वाराणि अन्यानि अनेकानि उपकरणानि च चन्दनविरचितानि आसन्। बहवः पर्यङ्काः चन्दननिर्मिताः आसन्। अचिरं कर्णः चन्दनकाष्ठं सङ्गृह्य ब्राह्मणम् अवदत्, "भगवन्! भवान् भोजनं पचतु।"

तस्य आतिथ्येन श्रीकृष्णः प्रसन्नः। सः बहिर् आगत्य अर्जुनम् अवदत्, "पार्थ, तव राजसदनेऽपि द्वाराणि चन्दनविरचितानि सन्ति। तानि दातुं पाण्डवाः कृपणाः अभवन्। पश्य कर्णम्। दानधर्मयोः यस्य प्राणाः वसन्ति, आपत्काले स एव जानाति कुतः कथं च पदार्थः प्राप्तव्यः इति।"

(कल्याणपत्रिकायाः एकस्याः कथायाः अनुवादः। अनुवादिका— डॉ. प्रमिता अग्रवालः)

# जननीपदवन्दना

(उत्कलीय-चक्रकेलि-वृत्तेन गातव्यम्)

एषा मम स्नेहमयी जननी।
सदा सुखे दुःखे सुधाहासिनी ॥१॥

वाणी कण्ठे तस्या अतिमधुरा।
कदापि न सा भवति निष्ठुरा ॥२॥

तस्या हृदये अमिता करुणा।
मम पालने सा अतिनिपुणा ॥३॥

मम दुःखे सा भवति दुःखिनी।
मम सुखे सा भवति सुखिनी ॥४॥

पादतले तस्या मम प्रणतिः।
तस्या निकटे मम नास्ति भीतिः ॥५॥

—पण्डितहरेकृष्णधूपालशर्मा

# द्वौ सम्बन्धिनौ

आस्तां द्वौ वृद्धौ सम्बन्धिनौ। पुत्रकन्ययोः विवाहात् पर तयोरयं सम्बन्धः। कन्यापिता जडवाक् वरपिता च बधिरः। स्वरूपप्रकाशभयात् तयोः संलापः नाभवत्।

अथ जडवाक् रुग्णो भवति। चिर गृहे चिकित्स्यते स.। आरम्भे किञ्चिद् आरोग्यं लक्ष्यते स्म। पर तस्य जीवनं शङ्काकुलम् अभवत्, जीवितेच्छा क्षीणतरा जाता। अन्तिमः समयः सन्निकट इति मत्वा तस्य पत्नी कन्याम्, जामातरम्, सम्बन्धिनं सम्बन्धिनीं च आह्वयति।

अथ बधिरः स्त्रीपुत्रवधूभिः सह सम्बन्धिगृहं प्रयाति। उच्चै.श्रवाः सः। सम्बन्धिना सह कथम् आलापं कुर्याम् इति तस्य महासमस्या आपतति। मार्गे स एवं चिन्तयति —

आरम्भे 'कथं भवान्? अपि सर्वं कुशलम्?' इति प्रक्ष्यामि। पूर्वापेक्षया वरतरः स. इति मया पूर्वं समाचारः प्राप्तः। अत. 'आम्, वरतरः अस्मि' इति उत्तरं लप्स्ये। तदा 'साधु, साधु, इत्थं भवान् शनै. शनैः स्वास्थ्यं प्राप्स्यति, कालेन सर्वं साधु भविष्यति' इति अहं वदिष्यामि।

ततः किं पृच्छेयम्? ...आम्, 'किं सेवते भवान्?' इति प्रक्ष्यामि। स तु 'औषधम्, सूपम्, फलरसादिकं सेवे' इति वदेत्। तदा 'साधु, साधु, उत्तमं पथ्य सेव्यते। अनुवर्त्यताम्। अचिर भवान् स्वस्थः भविष्यति' इति अहं कथयिष्यामि।

तत्परं 'कः भवत. चिकित्सकः?' इति जिज्ञासां करिष्ये। 'अमुकवैद्य' इति नूनं तस्य उत्तरं भवेत्। तदा 'साधु, साधु, उत्तमोऽसौ वैद्यः। सः एव समाश्रयणीयः। तेनैव भवान् निरामयः भविष्यति' इति अहं सान्त्वयिष्यामि।

अत्रान्तरे ते सर्वेऽपि सम्बन्धिगृह प्राप्ता·। बधिर सम्बन्धिनम् उपगम्य 'कथ भवान्? अपि सर्वं कुशलम्?' इति परिपृच्छति।

—'न, न सम्बन्धिन्! रोगः न गच्छति, कतिचिद्-दिनेभ्यो वर्धतेतराम्, ह्य प्रभृति ताप· शनै शनै वर्धते' इति जडवाक् स्खलितास्पष्टवाचा उत्तरति।

बधिरः झटिति 'साधु, साधु इत्थ भवान् शनै. शनै· स्वास्थ्य प्राप्स्यति, कालेन सर्वं समीचीनं भविष्यति' इति प्रतिवदति।

एनत् श्रुत्वा जडवाक् कुपितः चिन्तयति — 'किं कथयति एषः! मुमूर्षु अहम्। ज्वरः वर्धते दिनानुदिनम्। कालेन किं परलोके स्वास्थ्य प्राप्स्यामि? मत्त. खलु एष!'

ततः बधिरः 'किं सेवते भवान्?' इति जिज्ञासते। कुपितः सम्बन्धी 'पाशु सेवे' इति साक्रोशम् उत्तरति।

—'साधु, साधु, तदेव सेवनीयम्! उत्तम पथ्यं तत्! तेनैव भवान् अचिर स्वस्थ भविष्यति' इति उत्तरदत्तचित्त. बधिरः प्रतिवदति।

एतद् आकर्ण्य जडवाक् अतिशय कोपदग्धः।

ततः 'कः भवत चिकित्सक·?' इति पृच्छति बधिरः।

—'यमः' इति कोपावेगेन जडवाक् उत्तरति।

—'साधु, साधु, स एव उत्तमो वैद्य। तेन भवान् अचिर निरामय भविष्यति' इति परामर्शं ददाति सः तस्मै।

एतत् श्रुत्वा सर्वेऽपि तत्र उच्चैः हसन्ति। तेषाम् अट्टहासेन यम दूरं पलायते इव! हासेन सुखम् अनुभवति जडवाक्। स सम्बन्धिन. स्वरूपं

परिचिनोति । पूर्वाकलन वास्तवक्षेत्रे विपरीतफलम् अजनयत् इति स अवबोधति । अत.

वदेय कि च कि कुर्या तदेति कृतचिन्तन. ।
भवेद् बधिरवद् हास्य कार्यकाले समागते ॥

---

# सरलं संस्कृतं न तु सरलीकृतम्

सस्कृतम् !

सस्कृतं सर्वैं शिक्षणीयम् । ये केऽपि अत्र कार्यं कुर्वन्ति ते सर्वे एतत् शिक्षेरन्.. न तु पण्डितानां सम्कृतम्. .सर्वे, सर्वे एव, यत् किमपि भवेत् तेषा जन्मस्थानम् ।

न खलु तै पाण्डित्यपूर्ण सम्कृत शिक्षणीयम् अपि तु तत् सस्कृत यत् भारतस्य सर्वभाषा प्रति द्वारम् उन्मीलयति । मन्ये एतत् अपरिहार्यम् । श्रेष्ठं भवेत् यत् कतिपयवर्षैः भारतस्य प्रतिनिधि-भाषा स्यात् नवयौवनशालि सस्कृतम्, भाषित संस्कृतम् । सस्कृतं हि सर्वासा भारतीयभाषाणा पृष्ठत विद्यते । तदेव उपादेयम् । अयमेव आसीत् श्रीअरविन्दस्य विचार: यदा चर्चितोऽय विषय आवाभ्याम् । इदानीम् आङ्ग्ली समग्रदेशस्य भाषा, किन्तु अस्वाभाविकं तत् । इतरजगता सह सम्बन्धस्थापने परमोपयोगिनी सा, किन्तु यथा प्रत्येकदेशस्य विद्यते कापि स्वकीयभाषा तथैव भारतस्यापि भवेत् । अत्र च यदैव कोऽपि समग्रदेशस्य एका राष्ट्रभाषा कामयते तदैव सर्वे कलहम् आरभन्ते । प्रत्येकमिच्छति मदीया मातृभाषा एव राष्ट्रभाषा भवतु इति । तच्च मूढतापूर्णम् । सस्कृतविषये कस्यापि आक्षेप: न भवेत् । इयम् इतरभाषाभ्य: प्राचीनतरा, सन्ति चात्र ध्वनय:, बहूना शब्दाना मूलध्वनय ।

...तेषु कतिपय-मूलध्वनय: विश्वस्य सर्व-भाषासु लभ्या: । ...तत्, तदेव खलु शिक्षणीयम् । एतत् (सर्वभाषाव्यापि सस्कृतम्) एव भारतस्य राष्ट्रभाषा भवेत् । भारते जात प्रत्येकशिशु तथैव सम्कृत जानीयात् यथा फ्रासदेशे जात. प्रत्येकशिशु फ्रासी जानाति । न स ता सम्यक् भाषते, न वा सुगभीर जानाति, किन्तु तेन किञ्चित् फ्रासी ज्ञातव्या एव । जगत. सर्वदेशेषु एषा एव स्थिति । ज्ञातव्या एव शिशुना निजराष्ट्रस्य भाषा । ततश्च शिक्षाकाले स यति भाषा. इच्छति तति अधीते । ..

अत: कामयेऽहं यदत्र सरलम्, यथाशक्य सरलं संस्कृत शिक्ष्यताम्, न तु सरलीकृतम्, स्वोद्गम प्रति गच्छत् सरलम् । . .

११. ११. ६७                                                     — श्रीमाता

श्रीअरविन्दाश्रमस्थे शिक्षाकेन्द्रे शिक्ष्यमाण-विषयाणा प्रसङ्गे श्रीमात्रा उक्तमिदं वचन समस्तभारतवर्षेण सम्बद्धमिति स्पष्टमेव ।

संस्कृतानुरागिणा नासीत् सर्वथा अभाव: कदापि देशेऽस्मिन् । सस्कृतं जीवनभाषा, दैनन्दिन-भाषा भवितुमर्हति विद्यते एव वा इति अनवरत प्रतिपाद्यते विविधजनै. विविधरूपै सर्वदैव । पराधीनतायामपि देशेऽस्मिन् इतस्तत कोणेषु गुप्तं संस्कृतमजीवदेव । तस्य समस्तवाङ्मयम् — महा-कृतिभ्य: आरभ्य साधारणरचनापर्यन्तम् — सस्कृत-सरस्वत्या: अविच्छिन्नम् अजस्रप्रवाहं प्रमाणयति ।

कालपटे प्रवाहोऽय सागरसदृश: सर्वप्लावी आसीत् किं वा सूत्रसम. सूक्ष्मकाय. इति भिन्न विषय । अस्तित्व ननु अविहतमिति प्रत्यक्षमेव ।

तथा सति "सरल सस्कृत न तु सरलीकृतम्" इति श्रीमातृवचनाश किं नूतनं प्रतिपादयति इति प्रश्न: । अथ विचार्यते एतदत्र यथाशक्ति —

इदानी सहसा संस्कृतस्य पुनर्जागरणाय समस्तदेशे संस्कृतप्रेमिण: श्रीमातु: वचनं जानन्तोऽजानन्तोऽपि वा विविधप्रयासेषु सोत्साह रता सलग्नाश्च दृश्यन्ते । अपि नैतदाश्चर्यकर प्रमाणं तस्या. वचनस्य अदृश्यशक्त्या: ? सम्भाषण-शिबिराणि, विभिन्नविद्यालयेषु विशेषेण सस्कृतस्यैव अर्थे दीयमाना: नानाछात्रवृत्तय:, देशे विदेशे च स्वयं सस्कृतशिक्षणदृष्ट्या विविधपाठाना ध्वनि-लिखिता: कोशिका: (recorded cassettes) या: इदानी सर्वोपलभ्या:, सम्पुटित्राङ्किता: पाठा (computerised lessons / courses), पत्राचारमाध्यमेन सस्कृताध्यापनम्, सस्कृतप्रचाररता नैकसमितय:, विविधसस्थासमितिभि: सरलसंस्कृत-पुस्तकाना प्रकाशनम्, संस्कृतप्रतिष्ठानै: प्रकाशिता: बहुविधसामग्रीसवलिता: पत्रिका:, संस्कृतवृत्तपत्राणि, आकाशवाणीत: वार्ताप्रसारणम्, सम्पूर्णग्रामस्य संस्कृतग्रामरूपेण परिवर्तनप्रयत्न: (यथा कर्णाटकप्रदेशे मत्तूरनामकग्रामस्य) इत्यादय: अनल्पा: उपाया: समकालमेव सस्कृतजागरणार्थ प्रयुज्यमाना: दृश्यन्ते । केषुचित् प्रान्तेषु तत्रत्यशासनेन विद्यालयेषु संस्कृतस्य निषेधोऽपि क्रियते किन्तु निषेधोऽसौ उपर्युक्तप्रयासरताना निराशीकरणे असफल: ।

प्रत्येकभाषा धत्ते स्वकीयम् अद्वितीयं वैशिष्ट्यम् । तस्या: इद वैशिष्ट्यं ननु प्रकृतिगत न तु शब्दगतम् । तेनैव कापि भाषा इतरभाषाणां मध्ये विशेषस्थानं लभते । सा च विशेषता भाषाया: बालसुबोध्ये सरलरूपे वा पाण्डित्यपूर्णे दुर्बोध्यरूपे वा अक्षुण्णा तिष्ठति । यथा केनापि शिशुना सह भाष्यमाणा आङ्ग्ली आङ्ग्लीत्वम्, हिन्दी हिन्दीत्वम्, फ्रांसी फ्रांसीत्व वा न जहाति तथैव संस्कृतमपि निजसरलरूपे संस्कृतत्व न त्यजेत् इति अनिवार्यम् अस्या: भाषाया: शुद्धतारक्षणाय ।

सर्वासु अपि भारतीयभाषासु प्राचुर्येण सस्कृत-शब्दा: यथावत् विद्यन्ते किन्तु अर्थदृष्ट्या तेषामर्थ सर्वदा स एव न तिष्ठति य. सस्कृते विद्यते । तथा हि — आराम:, माया, मोह., चिन्तित., ममता, निर्मम, उदास: इत्यादय. बहव. शब्दा: हिन्द्यां येषु अर्थेषु प्रयुज्यन्ते ते न सस्कृतसम्मता: । तेषु अर्थेषु सस्कृते क्रमश: — विश्राम., भ्रान्ति:, आसक्ति:, चिन्ताकुल: / सचिन्त:, वात्सल्यम्, निर्दय:, खिन्न. इति शब्दा: प्रयोक्तव्या: । एवं प्राय: सर्वासु भारतीयभाषासु ईदृशोदाहरणानि लभ्यानि । लेखस्य दीर्घताभयात् न क्रियतेऽत्र विस्तार: । अत: शब्दप्रयोगे अस्माभि: सावधानै: भवितव्यम् ।

वाक्यरचनायामपि सा एव सावधानता अनिवार्या अन्यथा 'इससे काम चल जायेगा', 'कोई बात नहीं' इति हिन्दीवाक्यद्वयस्य सस्कृते 'एतेन कार्यं / कर्म चलिष्यति', 'न कापि वार्ता' इत्यनुवाद: हास्यास्पदं स्यात् । एतादृग्वाक्याना निरर्थकता तादृशी एव यादृशी 'मेरा सिर चक्कर खा रहा है' इति वक्तव्यप्रकाशनाय 'My head is eating circles' इति आङ्ग्लानुवादस्य स्यात् । आङ्ग्ल-व्याकरणदृष्ट्या शुद्धमपि इदं न आङ्ग्लवाक्यं प्रकृतिदोषात् । पूर्वोक्तवाक्ययो: संस्कृतानुरूपं भाषान्तरं सरलं सर्वसुबोध्यं वा दुर्बोध्यं पण्डित-स्तरीयं वा कर्तु शक्यते । यथा, 'प्रयोजनसाधकमिदम् /

प्रयोजन सेत्स्यति एतेन/एतेन कार्यसिद्धि. भवेत्/एतेन (कार्यम्=इष्टम्, करणीय) भविष्यति/भवेत्।' इति प्रथमवाक्य कठिनात् सरलतर भवितु शक्नोति । तथैव 'अकिञ्चित्कर तत्', 'अविशेष हि तत्'/'महत्त्वहीन खल्विदम्'/'न तस्य महत्त्वम्' इत्यादिरूपेण द्वितीयवाक्य प्रसङ्गत सरल कठिन वा वक्तु शक्यते । लोकभाषा सर्वदा सरला सर्वबोध्या एव इति अलं कथनेन । अत: व्यवहारभाषा सस्कृतमपि सरलम् एव भवेत् न तु वैदुष्यस्तरीयं साहित्यिकम् ।

श्रीमाता स्वय सरलमिति विशेषणस्य अभिप्रायं स्पष्ट कृतवती — 'स्वोद्गम प्रति गच्छत् सरलम्' ।

अवधेया हि इय व्याख्या । को नु सस्कृतस्य उद्गम ? कथं च सस्कृत तं प्रति गच्छेत् ?

संस्कृतस्य उत्स: लभ्य: सुदीर्घकालिके सस्कृतवाङमये । तत्र वैदिकवाङमयादारभ्य लौकिकवाङमयपर्यन्तं संस्कृतस्य सुसमृद्धा सुविशाला च प्रकृति: अविच्छिन्ना विराजते । तत. परवर्तिनि आधुनिकसाहित्ये क्रमश: संस्कृते इतरभाषाणा प्रभाव दृष्टिगोचर. भवति । गच्छता कालेन लोके सर्वसम्भाषित संस्कृतं यदा राजप्रासादेषु निरुद्धमभूत् तदा क्रमश: जनमानसाभिव्यक्तये इतरा. विविध-भाषा: विकसिता: । महानद्या: मुख्यधाराया: निर्गता: लघुनद्य. इव एता: भाषा: लोकजीवने प्रचार प्रसारं च अलभन्त । शब्दसम्पत् सस्कृतमूला एवासीत्, अत. तासा लोकभाषाणां पार्थक्येऽपि संस्कृतसामीप्यं सुदृश्यमेव अभूत् । क्रमश. प्रदेशे प्रदेशे शब्दानाम् उच्चारणे अल्पश भेद अर्थस्य च विस्तार: सञ्जात: । अर्थविस्तारस्य शाखा प्रशाखा: नानादिशासु प्रवृद्धा. । अर्थविस्तारस्य अस्य मूलबीजमासीत् एकमेव, तच्च सस्कृते निहितम् । प्रारम्भे बीजाद् उद्भूतासु शाखासु अन्त:प्रवाहि-जीवनशक्ते स्पन्दनवशाद् अर्थबोधे आसीत् कश्चिद् जीवज्जाग्रदनुभव, स एव व्यवहारबलेन परिणत रूढौ । रूढार्थबोधे तिष्ठति केवल परम्परा एव, न तु जाग्रदनुभूति । वर्तमाना सर्वा अपि भारतीयभाषा रूढार्थबहुला । रूढार्थाना बाहुल्य न सस्कृतस्य मूलप्रकृते अनुरूपम् । अत अस्माभि जागरूकतया, सावधान मूलं प्रति, शब्दार्थानाम् उत्सं प्रति अभिमुखै. भवितव्यं नूतनतया च मूलप्रकृति. लब्धव्या येन शाखा-प्रशाखासु मूलस्य भ्रान्त्या वास्तवमूलात् दूरापकृष्टा: न भवेम । वैदिकवाङमये लभ्या संस्कृतस्य आदिप्रकृति· रूढार्थहीनप्राया प्रचुरतया जाग्रदनुभूतिसम्पन्ना च ।

अथ च, भाषाया: सामर्थ्यं खलु तद्भाषाभाषिणां भाववहनक्षमता । अत एव कालक्रमेण विकमिता· भाषागतविशेषता· ननु प्रदर्शयन्ति भाषकाणा दृष्टिकोणम्, मानसस्तरम्, चरित्र जातिगत-वैशिष्ट्य च । कस्या: अपि भाषाया: जीवनकाल: (स काल: यदा सा लोकभाषिता आसीत्) प्रमाणयति निसर्गत: प्रगतिशील-मानवसमुदायेन सह तद्विकास-क्षमताम् । यथा मनुष्यचेतनाया विकास: अनिवार्य. तथैव तां चेतनामभिव्यञ्जितुं समर्थाया: भाषाया: विकासोऽपि अपरिहार्य· । तस्य विकासस्य अभावे भाषा पङ्गुवत् अग्रे गन्तुमनर्हा तत्रैव विरमेत् शनै: शनै· म्रियेत च । अनया दृष्ट्या संस्कृतभाषा मानवजाते. इतिहासे सहस्रत्रयोत्तरवर्षमिते काले भाववहनक्षमा आसीत् । दुर्भाग्यवशात् — न तु असामर्थ्यवशात् — कञ्चित्काल पूर्ववत् अनुप-युज्यमाना सा इदानी पुन भाषासु समर्थतमा इति घोष्यते आधुनिकै: श्रेष्ठभाषाविद्भि. । आधुनिकतम-आविष्काराणां जगति योग्यतमा सा इति भाषासु श्रेष्ठता भजते । असम्भाषितापि सा सकल-

भारतीयभाषाणा पृष्ठवर्तिनी ता मातेव सम्पोषयति इति निर्विवाद सर्वविदित सत्यम् । ईदृग्-इतिहास-सम्पन्ना शक्तिशालिनी भाषा कस्मिन्नपि मुहूर्ते मृता मरणासन्ना वा न भवितु शक्नोति ।

यस्या भाषाया: एतादृशी गभीरा अक्षुण्णा च प्रकृति: तस्या पुनर्जागरणे उत्साहिभि सर्वैरपि अवधेयमिद सत्य यत् सा सरला स्यात्, निजप्रकृतौ वर्तमाना सरला न तु कृत्रिमैरुपायै. सरलीकृता । सर्वासा भारतीयभाषाणा पृष्ठत· सस्कृत विद्यते इति सत्यात् भारतीयभाषाणा शाब्दिकानुवादमात्रमेव सस्कृतमिति न बोध्यम् ।

कृत्रिमोपायेषु केचित् उपाया: उद्धर्तु शक्यन्ते —

१. द्विवचनस्य बहिष्कार. । प्रारम्भे तस्य अप्रयोग: न तथा क्षतिकर: भवेत् यथा पूर्णत बहिष्कार: । सा तु भाषाया: विकलाङ्गता ।

२. विशेषणबहुलताया: अस्वीकृति । 'तस्य पाद: भग्न' इति स्थाने 'भग्नपाद· स.' इति वाक्यं सस्कृतप्रकृते. समीपतरम् । कारण तु सूक्ष्मतरं प्रकृतिगतमेव । भाषाया: प्रकृतिवैशिष्टचम् आश्रयते तद्भाषाभाषिणा दृष्टिकोणम् । सस्कृत-भाषायां कोऽपि अनुभव: साकल्येन संहतिपूर्वकम्, अखण्डितम् अभिव्यञ्जितु शक्यते इति तस्या: प्रकृतिगतं सुमहद् वैशिष्टचम् । अस्याम् अभिव्यञ्जनाया विशेषणपदानां विशेषमहत्त्वम् । अत एव संस्कृतसाहित्ये प्रायश: विशेषणबहुलानि वाक्यानि दृश्यन्ते । दृश्यविषयस्य एकता (विविध-वैशिष्ट्ययुक्ता) अनेकता वा (अनेकाङ्गाना समन्वय: सम्मेलो वा) दृष्टे. वैशिष्टचं द्योतयति । यथा — 'पुरत. एकं गृह वर्तते । तत् उच्चम् । तस्य रङ्ग: पीत. । तस्मिन् बहूनि द्वाराणि वातायनानि च सन्ति । तत् परित उद्यान वर्तते ।' इति बहुवाक्यात्मक सम्पूर्ण वर्णनमेकवाक्येन शक्यम् । यथा — 'अत्युच्चम्, पीतवर्णम्, द्वारवातायनबहुल सोद्यान च पुरोवर्ति गृहम् ।' दीर्घताकारणाद् वाक्यमिद दुर्बोध प्रतीयेत न खलु शब्दावलिदृष्टचा । भाषापरिचयस्य गाम्भीर्येण सह क्रमश· कस्यापि वाक्यस्य दीर्घता शब्दावलिश्च सरले जायेते । दैनन्दिनभाषाया वाक्याना लघुतैव स्वाभाविकी । वक्तु: पक्षे प्रथमवाक्ये द्रष्टा बहून् विषयान् पृथक् पृथक् पश्यति वर्णयति च । श्रोता सर्वाणि वाक्यानि श्रुत्वा अन्ते सर्वेषां समन्वयं कृत्वा एकस्य पदार्थस्य — गृहस्य — पूर्णचित्र लभते । विभिन्नाङ्गाना समायोजनेन एकस्य तत्त्वस्य ग्रहणम्, तस्याभावे तु अनेकवस्तुग्रहणमेव । एकवाक्यात्मके वर्णने तु वर्ण्यविषय: गृहमेव किन्तु तत् विविधवैशिष्टचयुक्तम् । विशेषणपदानि शृण्वन् श्रोता वाक्यान्ते विशेष्यपदं गृहमिति श्रुत्वैव सम्पूर्णम् अखण्डचित्रं लभते । अत. भाषाया: सरलताया: अर्थे कठिनशब्दानाम् अतिदीर्घा समासा: वर्जनीया: किन्तु सरलसमासानां प्रयोग रक्षणीय: । अनया दृष्टचा हि 'तस्य पाद: भग्न: । स: गच्छति ।' इति वाक्यद्वयस्य 'भग्नपाद: स. गच्छति ।' इति एकेनैव वाक्येन प्रकाशनं सस्कृतप्रकृते· समीपतरं सरल च । सन्धिसम्बन्धेऽपि तथैव सावधानतया विचार्यम् ।

३ एकाधिकधातूनां प्रयोग: एकस्या. क्रियाया अर्थे । यथा — रक्षामि = रक्षां करोमि, नृत्यामि = नृत्य करोमि, सञ्चालयामि = सञ्चालन करोमि इति दिक् । एतादृशै: प्रयोगै: भाषाया: सक्षिप्तता हीयते या हि तस्या विशेषतासु अन्यतमा । सर्वदा शिशुभि: सह एतादृशा: प्रयोगा: प्रारम्भे उपयोगिन: स्यु: किन्तु न प्रौढमतिभि: सह ।

४. प्रादेशिकशब्दानां प्रादेशिकार्थे प्रयोगः । यथा — रक्ष्-धातोः प्रयोग. स्थापने निक्षेपणे वा, मिल्-धातोः प्रयोग प्राप्त्यर्थे ।

५. भारतात् इतरदेशभाषाणां शब्दानां यथावत् ग्रहण तेषा सस्कृतीकरणं च । यथा — कारेण / कारस्य = by / of car इत्यर्थे, बैङ्के = in the bank इत्यर्थे, मोटरात् = from motor इत्यर्थे एतेषां ग्रहणे अनिवार्ये सति सस्कृतरीत्या वाक्ये प्रयोगः भवेत् न तु तत्तत्-शब्दस्य विभक्तिरूप सम्पाद्य । अस्वाभाविकं हास्यास्पदं च भवेत् तत् । यथा — 'कारेण गच्छामि' इति नोक्त्वा 'कारयानेन गच्छामि इति प्रयोग वरतर. । कारशब्द. स्वय संस्कृते पूर्वत विद्यते एव यथा, लौहकार', कुम्भकारः इत्यादिषु समासपदेषु । यदि शिशुमनसि प्रथमसंस्कारेण 'कार'शब्दः यानवाचकतया निविष्ट. स्यात् तर्हि लौहकार. इति शब्देन लौहनिर्मित कारयानमेव तस्य बोध्य स्यात् । इमां प्रमादपूर्ण-भ्रान्ति निवारयितु जातिवाचकपदेन सह समासः करणीय' अथवा सुगभीरज्ञानमाश्रित्य सार्थकशब्द रचनीय. । Bank-अर्थे अधिकोष इति शब्दः उपयुक्त इति सस्कृते नवशब्दरचनाया' उदाहरण ग्रहीतु शक्यते ।

६ केवलं ध्वनिसाम्यम् आश्रित्य ध्वनि-साम्यार्थ नूतनशब्दाना रचना । अर्थगाम्भीर्येण सह ध्वनिसाम्य न प्रकृतिघातकम्, तदभावे तु असंस्कृतमेव । उदाहरणार्थम् — Doctor = द्राक्तरः, Technique = तकनीक इत्यादि । एतेषां शब्दाना निर्माणे ध्वनिसाम्यमेव कारणम् । नोचेत् चिकित्सक' / भिषक्, प्रविधि / शिल्पकौशलम् इत्यादिकशब्दाः पूर्वतः एव विद्यमाना । Pedal = पद्लम् — अत्र अर्थस्य सङ्गतिसहितं ननु ध्वनिसाम्यम् अस्ति । अतः ग्राह्यमेव ।

यत् प्रकृत्या न सरल तद् बलेन सरल कृतमिति अभिप्राय' एव सरलीकृतमिति शब्दे कृत्रिमोपायाना सम्भावना सङ्केतयति । यथा, संस्कृत-काव्यस्य विविधप्रकारेषु चित्रकाव्यम् अधमं गण्यते यतो हि कवेः सम्पूर्णप्रतिभा प्रधानतया केवलं शब्दचमत्कारे एव विलसति अवस्यति च, अर्थस्तु गौणतां भजते, तथैव आधुनिकशब्दावल्याः संस्कृतरूपान्तरणे अर्थगाम्भीर्यम् उपेक्ष्य ध्वनि-साम्यमेव प्रधानतया विचिन्तयन्तो वयं सस्कृत-भाषाम् अधमता न नयेम । न वा प्रान्तीयभाषाणां वाग्व्यवहारं सस्कृतव्याकरणमात्रस्य समावेशेन संस्कृतं गणयेम । तत्तु प्रान्तीयभाषाणां प्रतिच्छाया-मात्रं न तु स्वकीयप्राणशक्त्या अनुप्राणितं सस्कृतम् । वर्जनीया' तादृशप्रयोगाः । प्रादेशिकभाषाणां शब्दानां पृष्ठत. संस्कृतस्य मूलधातूनाम् अन्वेषणेन, पदार्थविचारपूर्वक तदनुकूलधातूनां प्रयोगेण नूतनशब्दाः रचनीयाः ।

संस्कृतजागरणे उत्कटोत्साहिनाम् उत्साह-प्राबल्यं कथमपि तेषां धैर्यनाशकं न भवेत् । सस्कृतवाङमयानुशीलनं तप साध्यम्, प्रदेशेषु प्रचलिताना शब्दाना मूलान्वेषणम् अर्थबोधनं च परिश्रमसाध्यम्, नूतनशब्दाना रचनं गभीर-ज्ञानसाध्यम् — इद सर्वं च परमधैर्यसाध्यम् । धैर्यं विना केवलम् उत्साहसहायाः सस्कृतानुरागिणो वयम् असंस्कृतसंस्कृतस्य प्रचार कुर्वन्तः तस्य भगवद्विधानस्य प्रतिकूल-आचरणेन सौभाग्यवञ्चिताः न स्याम यस्य प्रकाशनं श्रीमाता १९ ४ ७१ दिनाङ्के एतै. शब्दै. अकरोत् —

"The Sanskrit ought to be the national language of India."

Blessings

— The Mother

"संस्कृतं भारतस्य राष्ट्रभाषा भवेत् ।"
ममाशिषः
—श्रीमाता

अस्मिन् वाक्ये Sanskrit इति पदात् पूर्वं 'The' इति पदम् अवधेयम् । अपि किमपि सुनिश्चितं विशिष्टं वा संस्कृतरूपं भारतस्य राष्ट्रभाषारूपेण काम्यम् अथवा यत्किमपि रूपम् ? 'The'-पदरहितं वाक्यं किमभिप्रायं स्यात् ? मननशीलैः संस्कृतानुरागिभिः स्वयं विचारणीयः अयं विषय इत्यलम् अतिविस्तरेण । —चिन्मयी

बालनाटिका

# महामूर्खः

(पात्राणि — राजा, यतिः, षड् मूर्खाः, गर्दभः ।)

राजा – (चिन्तयन् भ्रमति) अहं राजा किन्तु ख्यातिं न लभे । कथमपि प्रसिद्धो भवितुम् इच्छामि । अहं न महावीरो युद्धबलेन विजयश्रियं प्राप्तुम् । नाहं तथा ज्ञानी यथा जना मम आदरं कुर्युः । ...अस्तु, विक्रमादित्यस्य सभायां नव पण्डिताः आसन्, मम सभायां सप्त मूर्खाः स्थास्यन्ति । तेषां विनोदवचनैः अहं सुखेन कालं यापयिष्यामि । (निष्क्रान्तः । कोणस्थे यतौ प्रकाशः ।)

यतिः – ॐ नमः शिवाय । भगवन् ! त्वं सर्वेभ्यः सर्वं ददासि । किन्तु प्रतिदाने वयं तुभ्यं किं दद्मः ? कियत् दद्मः ? विचित्रा तव सृष्टिः ! (ध्यानस्थः)

राजा – (प्रविश्य) तत्र कोऽपि साधुः उपविष्टः । तं पृच्छामि । गुरुदेव !

यतिः – कः ? अहो राजा ! स्वागतं ते । किं कुर्यां तव ?

राजा – (उपविश्य) गुरुदेव ! अहं सप्त मूर्खान् इच्छामि । यथा विक्रमादित्यस्य सभायां नव पण्डिताः आसन् तथैव मम सभायां सप्त मूर्खाः स्थास्यन्ति । तेषां विनोदवचनैः अहं सुखेन कालं यापयितुम् इच्छामि । कुतः प्राप्स्यामि तान् ?

यतिः – अस्मिन् ग्रामे बहवः मूर्खाः सन्ति । त्वं शीघ्रमेव षड् मूर्खान् प्राप्स्यसि ।

राजा – अथ सप्तमम् ?

यतिः – सप्तमम् अन्ते दर्शयिष्यामि । गच्छ ।

राजा – तथा । (निष्क्रान्तः । पुनः प्रविश्य पश्यति —कोऽपि पादयामं धारयितुम् इच्छति । द्वौ बालकौ तद् धरतः । सः तस्मिन् लम्फितुं यतते ।) भोः किं जातम् ? किं करोषि त्वम् ?

प्रथममूर्खः – कस्त्वम् ? गच्छ । पिता मह्यं पादयामं दत्त्वा गतः । अहं तद् धारयामि । इमौ मम साहाय्यं कुरुतः । (वृक्षम् आरोहति ।)

राजा – वृक्षे किं करिष्यसि ?

प्र मूर्खः – सत्यं मूर्खस्त्वम् । अन्यथा अस्य अन्तरे कथ प्रविशेयम् ?

राजा – अरे मूर्ख ! पश्य, दर्शयामि । (इति दर्शयति ।)

प्र मूर्ख – त्वं सत्य बुद्धिमान् । अपि त्व राजा ? अहं त्वया सह वस्तुम् इच्छामि ।

राजा – अस्तु, आगच्छ । (तेन सह गुरोः सकाश गत्वा) गुरुदेव ! अयं प्रथमः । उपविशतु अत्र ।

यतिः – अस्तु, उपविशेत् । (राजा निष्क्रान्तः)

राजा – (प्रविश्य) अरे किमेतत् ? सा महिला गर्दभे कथम् उपविशति ? अयि भगिनि ! किमर्थं गर्दभे विपरीतम् उपविशसि ? किमर्थं वा स्वपोटली मस्तके धारयसि ? कुतः गर्दभस्य पृष्ठे न स्थापयसि ?

मूर्खा – पश्यामि, सत्यं मूर्खो भवान् । अहम् इत्थम् उपविशामि यतो हि गर्दभः सम्मुखे मार्गं पश्यति, अहं पृष्ठे पश्यामि । अन्यथा पृष्ठतः यदि कोऽपि मां मारयेत् ? अपि च, मम पतिः अस्मै प्रचुर भोजनं न ददाति । अतः दुर्बल एष मां वहति, अहं तस्य साहाय्यं कर्तुं वस्त्रं वहामि । यदि एष वस्त्रम् अपि वहेत् तर्हि अधिकभारेण मरिष्यति ।

राजा – अह राजा, त्वा राजप्रासाद नेतुम् आगतः । गमिष्यसि ?

मूर्खा – आम्, अवश्यम् । (राजा ता गुरुसकाश नयति ।) गुरुदेव ! (मूर्खमण्डले) इयं द्वितीया ।

यतिः – अस्तु, अग्रे अन्वेषय ।

राजा – तथा । (निष्क्रान्त. । पुनः प्रविश्य कामपि स्त्रियं दृष्ट्वा) मातः ! किं करोषि त्वम् ?

अन्या मूर्खा – धान्यं भृज्जामि ।

राजा – किमर्थम् ?

द्वि. मूर्खा – मम पतिः क्षेत्रे वप्स्यति ।

राजा – तेन कि भविष्यति ?

द्वि. मूर्खा – त्वं राजा, कृषिविषये त्वं किं जानासि ? पश्य, यदि भृष्टधान्यानि वपामः तर्हि भृष्टधान्यानि क्षेत्रात् प्राप्स्यामः । मया तानि पुनः भर्जनीयानि न भविष्यन्ति । अधुना बोधसि ?

राजा – अस्तु, त्वं मया सह राजगृहं गमिष्यसि ? तत्र सुखेन स्थास्यसि । आगच्छ । (यतिसकाशं गत्वा) इय तृतीया । (निष्क्रान्तः । पुनः प्रविश्य) अरे रेरे, अरे रेरे, किं करोषि ? पतिष्यसि, मरिष्यसि । यत्र उपविशसि, तत् कृन्तसि । एवं कोऽपि शाखां कृन्तति ?

च मूर्खः – अहं कृन्तामि । गच्छ, गच्छ त्वं स्वमार्गे । (शाखा भग्ना । काष्ठिकः पतति । उत्थाय नृपस्य पादयोः पतित्वा) त्वं सत्यं महापुरुषः अन्यथा कथं पूर्वमेव अजानाः अहं पतिष्यामि इति ? अहं त्वया सह एव स्थास्यामि ।

राजा – आगच्छ । (गुरुसकाशं गत्वा) गुरुदेव ! अयं चतुर्थ. ।

यति – त्वम् अतिशीघ्रं जनान् प्राप्नोषि । गच्छ वत्स ! स्वकार्ये सफलो भव ।

(राजा निष्क्रान्तः । पुन प्रविश्य पश्यति —

कोऽपि भूमौ शेते । द्वौ सेवकौ गदया तस्य उदरं ताडयितु सज्जौ ।)

राजा – अरे कि कुरुथः युवाम् ? तस्य उदर स्फुटिष्यति ।

प. मूर्खः – (उपविश्य) कोऽयम् ? भो. ! किं कृत त्वया ? अत्र मशकानाम् उत्पातः । अतः एतौ अकथयम् — यदि मशकाः मम उदरे उपविशन्ति र्तर्हि तान् गदया मारयतम् । धिक् ! त्वत्कारणात् एक· मशक. पलायित. ।

राजा – किन्तु गदया तव उदरं स्फुटिष्यति ।

प. मूर्खः – तेन किम् ? मशकास्तु मरिष्यन्ति ।

राजा – आगच्छ मया सह । सुखेन स्थास्यसि । (गुरो सकाशं गत्वा) गुरुदेव ! अयं पञ्चमः । (निष्क्रान्त. । पुनः प्रविश्य कामपि स्त्रियं दृष्ट्वा) कि भगिनि ! शीतदिने जलकुण्डे किमर्थं तिष्ठसि ?

अपरा मूर्खा – कोऽपि ज्योतिर्विद् अवदत् — अद्य सम्पूर्णा पृथ्वी ज्वलिष्यति, किमपि न स्थास्यति । तस्मात् अह जलकुण्डे तिष्ठामि । अग्नि. अत्र मम किमपि कर्तुं न शक्ष्यति । अहम् इत बहिर् न गमिष्यामि ।

राजा – एवम् ! अस्तु, त्वम् अत्रैव तिष्ठ । एषोऽहम् आयामि । (गुरुसकाशं गत्वा) गुरुदेव ! मया षड् मूर्खाः प्राप्ताः । अधुना सप्तम द्रष्टुम् इच्छामि । कृपया दर्शयतु ।

यतिः – सप्तममूर्ख मम सम्मुखे तिष्ठति ।

राजा – कुत्र गुरुदेव ? अधुना केवलम् अहम् एव सम्मुखे तिष्ठामि ।

यतिः – तर्हि त्वमेव मूर्ख· ।

राजा – अहं मूर्ख. ?

यतिः – आम्, त्वं मूर्खः । विक्रमादित्य. स्वयं ज्ञानी आसीत् । तस्मात् स. पण्डितान् सभायां नियोज्य आनन्दं प्राप्नोति स्म । त्वं मूर्खैं सह आनन्दितः भवसि । अत· त्वं महामूर्ख. । (अन्ये पलायिताः)

राजा – (यतिं प्रणम्य) भवान् मां सत्यमार्गं दर्शितवान् ।

# विद्वत्तायाः बलम्

विद्वान् सर्वत्र पूज्यते। एषा कथा दर्शयति — कथं विद्वान् स्वभविष्यवाण्या जनान् प्रभावयितु शक्नोति, कथं परोपकारिरूपेण प्रसिद्धाः जनाः स्वार्थहानिभयात् अन्येषाम् उपकारमपि त्यक्तुम् उद्यताः भवन्ति।

भारतवर्षस्य उत्तरे, कश्मीरप्रान्ते काशीनाथः नाम कश्चित् महाविद्वान् प्रतिवसति स्म। सर्वत्र व्याप्तं तस्य यशः। जनाः शिक्षार्थं सर्वतोऽपि तम् उपागच्छन्ति स्म। सर्वेषां विदुषां मध्ये काशीनाथः एव महत्तमः आसीत्।

मानुषप्रकृत्यनुसारेण अन्ये स्थानीयाः पण्डिताः तेन सह स्पर्धन्ते स्म। तस्य पतनार्थं ते कपटोपाय चिन्तयन्ति स्म, तस्य नाम्नि राज्ञः सकाशे जल्पन्ति स्म। इत्थं तैः राज्ञः मनसि तं प्रति अविश्वासस्य भावना उत्पादिता। ईर्ष्यालुजनानां सानुनयवचनानि श्रुत्वा काशीनाथम् आहूतवान् राजा तस्य विद्वत्तायाः परीक्षार्थम्।

काशीनाथे राजसभाम् आगते राजा स्वसम्मुखे स्थितान् त्रीन् जनान् उद्दिश्य अब्रवीत् — "काशीनाथ! एषु त्रिषु एकः उन्मत्तः, अन्यः बधिरः, अपरा अन्धा। निजक्षमतया प्रतिदेहि तेभ्यः तेषां हृतशक्तीः। एष मम आदेशः।"

वराकः काशीनाथः! न स जातु आशास्त ईदृशम् आदेशं न च जानाति अधुना किं करणीयम्। तं तूष्णीकं दृष्ट्वा राजा अपृच्छत् — "कति दिनानि वाञ्छसि एतस्मै कार्याय?"

किञ्चित् विचिन्त्य तेन त्रिमासमितः समयः याचितः।

"किमर्थं त्रयः मासाः?" इति आश्चर्यं प्राकटयत् राजा।

काशीनाथः न्यरूपयत् — "हस्तरेखाणाम् अध्ययने मास एकः गमिष्यति। तत्परम् एतेषां त्रयाणां जीवने ग्रहाणां प्रभाव. परीक्षणीयः। तत्परमेव चिकित्साम् आरभेय।"

राज्ञा उत्तरितम् — "यदि असमर्थ. भवे. मासत्रयान्ते, राज्यत्यागः तव पुरस्कारः।"

काशीनाथः त्रिभिः सह राजसभाया निर्गतः। मासात् पर सभायां पुनरागतेन काशीनाथेन कथितम् — "महाराज! स्ववचनानुसारेण एतेषां हस्तरेखाणाम् अध्ययनं मया कृतम्। एषां नक्षत्राणां गतिरपि मया दृष्टा। अनुशोचामि यत् एतेषां जीवने नास्ति किमपि आनुकूल्यं न च भविष्यति एषु कस्या अपि चिकित्सायाः प्रभावः।"

राज्ञा सकोपं स पृष्टः — "किं तव तात्पर्यम्? कार्यं कर्तुम् असमर्थः त्वम्?"

शान्तः काशीनाथः धीरगम्भीरस्वरेण उदतरत् — "नैतद् महाराज! अभिचारमन्त्रद्वारा असम्भवम् अपि भवेत् सम्भवम्। अपि च, अस्माकं देशे तु सर्वं सम्भवम्। कः चमत्कारः न दर्शितः विद्वद्भिः! परन्तु एतस्मै कठिनकार्याय भवतः आज्ञां वाञ्छामि।"

"कीदृशी आज्ञा?" अधीरः राजा अपृच्छत्।

"ग्रहाणां मार्गान् परिवर्तयितुं भवतः अनुमतिं वाञ्छामि महाराज!" शान्तम् अब्रवीत् काशीनाथः।

"तत्कृते मम आज्ञया किं प्रयोजनम्? मया तु पूर्वमेव आदिष्टम्!" चकितेन राज्ञा पुनः पृष्टम्।

"एते त्रयः जनाः स्वहारिताः शक्तीः प्राप्नुयुः इति एतदर्थं ग्रहाणां स्थानं गतिश्च परिवर्तनीये।

तत्परिणामतः बहुजनानां भाग्यं प्रभावितं भविष्यति। भवतः भाग्यमपि कुप्रभावग्रस्तं भवेत्। कदाचित् हारयेत् भवान् निजसिंहासनम्। एतदर्थं वाञ्छामि भवतः आज्ञाम्, तां विना चिकित्साकार्ये अग्रे सर्तुं न शक्नोमि। एते त्रयः जनाः निर्विकाराः भवेयुः इति भवतः आज्ञा चेत्, अन्येषा भाग्यानां विषये वीतचिन्तः अहं श्वः एव एतेषां चिकित्साम् आरप्स्ये।"

वित्रस्तं संसन्मण्डलं काशीनाथस्य वचनं श्रुत्वा यतो हि साधुतरं जानन्ति ते विद्वांसः तस्य भविष्य-वाण्याः बलम्। न चैव काङ्क्षति कोऽपि त्रयाणां कृते पीडां सोढुम्।

राजकर्णे उपजपति प्रधानमन्त्रिणि राजा सत्वरम् अकथयत् — "यदि इत्थं तर्हि एवं मा भूत्।"

ततः दानमानादिना सह काशीनाथं गमनाय अनुज्ञापितवान् राजा। अपि च, कूटनीतिज्ञाः, ईर्ष्यालवः पण्डिता ततः पलायिताः न जातु पुनरागन्तुम्।

— सुमेधा.

# संस्कृतसाहित्यम् आधुनिकभारतं च

[त्रिशिरःपुरीस्थ-संस्कृतसाहित्यपरिषदः चतुःपञ्चाशत्तमं वार्षिकोत्सवम् उपलक्ष्य आयोजितायां विद्वत्सभायां प्रदत्तं भाषणम् अत्र प्रकाशयामः। अयम् उत्सवः National College Higher Secondary School, Trichy-2 इति प्रख्यातविद्यालयस्य सरस्वतीसदने विगत-ऑक्टोबर-मासस्य 27-28दिनाङ्कयोः आयोजितः आसीत्। –सं०]

मान्यवराः सभापतिमहोदयाः, सम्मान्याः विद्वद्वरेण्याः, संस्कृतप्रेमिणः भ्रातरः भगिन्यश्च! सर्वेभ्य. मम नमस्काराः। काञ्चीपुरस्थ-स्वामिपादानां निर्देशेन अयम् उत्सवः आयोज्यते इति पत्रमुखात् ज्ञात्वा, तान् प्रति गभीरश्रद्धासम्मानवशात् किञ्च भवद्भिः सह परिचयेन संस्कृतजनन्याः विशेषसेवा भवेत् इति आशया विश्वासेन च अहम् अत्र आगतः।

भवता निमन्त्रणप्राप्तेः परं महाकवि-सुब्रह्मण्य-भारतीमहोदयस्य संस्कृतविषयकः निबन्धः केनापि मह्यम् उपहृतः। ततः C. P. रामस्वामि-ऐयर्-महोदयस्य Is Sanskrit Dead ? इति लेखोऽपि मया प्राप्तः। एतत् निबन्धद्वयं मम हृदये गभीर-प्रभावम् अजनयत्। तत्परं कश्चन सज्जनः E. V. रामस्वामि-नाएक्कर्-महोदयस्य Sanskritisation इति पुस्तकस्य अंशमेकं माम् अश्रावयत्। तदनु म. पो. सि.महोदयस्य 'तमिळुम् समस्किरुतमुम्' इति पुस्तकस्य केचित् भागाः मया श्रुताः। अथ Dr. V. राघवन्-महोदयस्य संस्कृतविषयकाः केचन निबन्धाः मया अवलोकिताः। एतेषां मतानाम् आधारेण अहं स्वविषयम् उपस्थापयामि।

'संस्कृतसाहित्यम् आधुनिकभारतं च' इति मम आलोचनायाः विषयः। साहित्यशब्दस्य अर्थः भवतां ज्ञात एव स्यात्। तथापि प्रस्तुतविषयस्य स्पष्टीकरणार्थं तस्य पुनरुक्तिं कर्तुम् इच्छामि।

किं नाम साहित्यम्? सम्-उपसर्ग-पूर्वकात्

'धा'धातोः 'क्त'प्रत्यययोगेन, 'समो वा हिततयो.' इति कारिकया 'संहित, सहित' इति शब्दयो· उत्पत्तिः । संस्कृतशब्दोऽपि सम्-उपसर्गपूर्वकात् 'कृ'धातोः 'क्त'प्रत्यययोगेन निष्पन्नः । सम् सम्यक्, सततं सम्पूर्णतया च हितम्, उपकारं करोति इति साहित्यस्य लक्षणम् । हितेन सह वर्तते इति सहितम्, सहितस्य भावः कर्म वा साहित्यम् । साहित्यशब्द· सम्-पूर्वकात् 'धा' धारणे इति धातो· निष्पन्नत्वात् संगतिपूर्वकं धारणस्य, समन्वयस्य भावम् अपि सूचयति । किम् आधुनिकभारते संस्कृतसाहित्यस्य इमे गुणाः चरितार्थाः भवितुम् अर्हन्ति ?

भारतस्य प्रत्येकस्मिन् प्रदेशे तत्तसाहित्यं वर्तते । उत्कलप्रदेशे उत्कलसाहित्यम्, हिन्दीप्रदेशे हिन्दीसाहित्यम्, गुर्जरप्रदेशे गुर्जरसाहित्यम्, अत्र तमिळ्साहित्यम् । एतानि साहित्यानि तत्तत्प्रदेशानां हितं साधयन्ति इति तत्तत्प्रदेशानां नामभिः अभिधीयन्ते । किन्तु यदि किमपि प्रादेशिकं साहित्यं केवलं तदीयप्रदेशस्य हितम् एव चिन्तयेत्, समस्त-देशस्य हित विस्मरेत्, तर्हि तत् संकीर्णम्, निम्नकोटिकम्, निकृष्टं मन्येत । एकस्मिन् प्रदेशे तस्य आदरः स्यात् नाम, समस्तदेशदृष्ट्या तस्य किमपि मूल्यं नास्ति । सर्वोत्कृष्टं साहित्यं खलु तत् यत् समस्तमानवसमाजस्य हितं साधयति । संस्कृत-साहित्यं खलु एतादृशम् । संस्कृतसाहित्यं कस्यापि प्रदेशविशेषस्य नाम्ना न अभिधीयते यतो हि महायोगि-श्रीअरविन्दस्य मतेन तस्य आधारः सार्वभौमः, सनातनः, न तु प्रादेशिकः ।

डॉ. सर्वपल्ली - राधाकृष्णन् - महोदयाः अपि एतदेव कथयन्ति । तेषां मतेन — The literature of Sanskrit has enormous influence not only in our country but also in other parts of Asia. Sanskrit has moulded the minds of our people to the extent to which they are not conscious. Sanskrit literature is national in one sense, but its purpose has been universal.

राधाकृष्णन्-महोदयैः सम्यक् एव कथितं यत् संस्कृतसाहित्यं राष्ट्रियं सदपि सार्वभौमम् । वयं पश्यामः — सृष्टेः आदिकालात् अधुनापर्यन्तं संस्कृतसाहित्यम् अविच्छिन्नरूपेण प्रवर्तते । तस्य अनुशीलनं न केवलं भारते, अन्यदेशेषु अपि भवति । संस्कृतसाहित्यस्य इदम् अन्यतमं वैशिष्ट्यं यत् यदि कोऽपि तस्य परिशीलनं करोति तर्हि सः सङ्कीर्ण-प्रादेशिक-भावनायाः ऊर्ध्वं स्थातुं शक्नोति । म. पो. सि.महाभागाः अपि एतदेव कथयन्ति । अस्माकं देशस्य अधुनातन-स्थितौ सङ्कीर्ण-प्रादेशिक-भावनायाः ऊर्ध्वम् अवस्थानस्य आवश्यकतां वयं न अनुभवामः किम् ?

वयम् अत्र संस्कृत निन्दन्तः तस्य उपेक्षा कुर्मः । आङ्ग्लभाषा समस्तदेशस्य अर्थे पर्याप्ता इति उद्घोषयाम. । किन्तु भवन्तः आङ्ग्लदेशं गत्वा पश्यन्तु । सप्तवर्षपूर्वं Statesman* इति समाचारपत्रे एकः समाचारः प्रकाशितः आसीत् । तत्र आङ्ग्लदेशीयविद्वान् स्टिवेन्-थम्सन्-महोदयः कथयति—संस्कृतभाषा आङ्ग्लभाषां तदीय-क्रमिक-अवनतेः रक्षितुं शक्नोति । संस्कृतभाषा आत्म-विषयकं सत्यज्ञानं प्रदातुम् अन्यभाषाणां समृद्धिं च कर्तुं शक्नोति । म. पो. सि.महाभागा अपि एतदेव कथयन्ति । अधुना आङ्ग्लदेशस्य कतिपय-विद्यालयेषु

* Statesman (Calcutta) 6. 9. 83

सस्कृतस्य अध्यापन शिशुश्रेणीतः अनिवार्यरूपेण भवति । तत्र एकस्मिन् विद्यालये* सर्वेऽपि आङ्ग्लदेशीयाः छात्राः शिक्षकाश्च संस्कृतं जानन्ति, संस्कृते भाषितु पारयन्ति । किन्तु वयम् ? वयम् अत्र ऋषिमुनीनां वचनं तिरस्कृत्य संस्कृतं पण्डितानां भाषा इति मन्यमानाः तस्य विनाशं कुर्मः । किम् अनेन अस्माकं सम्मानः पृथिव्यां वर्धते ?

का नाम भाषा ? भाष्यते, भावप्रकाशनं क्रियते अनया इति भाषा । किम् अस्माकं देशे पण्डिताः संस्कृतं भाषन्ते ? यदि न भाषन्ते तर्हि कथं नाम संस्कृतं पण्डिताना भाषा ? यदि संस्कृतम् एकस्य वर्गविशेषस्य भाषा तर्हि विदेशेषु तस्य आदरः दिनानुदिनं कथं वर्धते ? अहम् अद्य अत्र संस्कृतस्य उपयोगिताविषये भाषणं करोमि । अद्यैव अमेरिकादेशे वाशिंग्टन्नगरे अमेरिकावासिनः संस्कृतस्य प्रशिक्षणं प्राप्नुवन्ति ! Sanskrit Today इति इय पत्रिका अमेरिकादेशात् आगता । अत्र अयं समाचारः वर्तते ।

अद्यत्वे अस्माकं देशे जातिगता भेदभावना प्रबला भवति । संस्कृतभाषायाः उपेक्षा अत्र कारणम् । यदि भगवत्याः श्रीमातुः उपदेशानुसारेण भारते जातः प्रत्येकं शिशु. संस्कृतं जानीयात् तर्हि एषा क्षुद्रा जातिगता उच्चनीचभावना स्थातुं शक्नोति किम् ? अस्मिन् विषये स्वामिविवेकानन्दस्य उपदेशः स्मरणयोग्यः । सः कथयति —

The only safety I tell you men who belong to the lower castes, the only way to raise your condition, is to study Sanskrit.

पुनः स कथयति —

The very sound of Sanskrit words gives a prestige and a power and a strength to the race.

संस्कृतशब्दानां ध्वनिरेव जातये सम्मानम्, शक्ति सामर्थ्यं च ददाति । भारतस्य स्वतन्त्रता-सङ्ग्रामे 'वन्दे मातरम्' इति शब्दद्वयम् अत्र उदाहरणम् । इदं शब्दद्वयं प्रसुप्तजातेः दुर्बलप्राणेषु प्रबलप्रेरणां प्रचण्डशक्ति च अजनयत् इति कः न जानाति ?

अधुना 'कम्प्यूटर्'-युगम् । अमेरिकादेशस्य वैज्ञानिकाः उद्घोषितवन्तः यत् 'कम्प्यूटर्'-अर्थे संस्कृतभाषा विश्वभाषासु सर्वोत्तमा । अस्यां स्थितौ सस्कृतस्य उपेक्षा अस्माकम् उपकाराय भवेत् किम् ?

गमनागमनसौविध्यात् अधुना पृथिवी एक-परिवारायते । वयम् अत्रैव स्थिताः पृथिव्याः अन्यभागे स्थितेन केनापि सह आलपितुं शक्नुमः । आलापे भाषा एव साधनम् । भाषा एव बन्धुत्वसम्पादने कारणम् । एतदर्थमेव जनाः अद्यत्वे बहुभाषाः ज्ञातुम् इच्छन्ति । बहुभाषाशिक्षणे संस्कृतभाषा प्रभूतं साहाय्यं कर्तुं शक्नोति । तत्र अहं स्वयं दृष्टान्तः । यदि अहं केवलम् उत्कलभाषाम् आङ्ग्लभाषां च अज्ञास्यं तर्हि तमिळ्भाषाशिक्षणे अन्यभाषाशिक्षणे च मम बहुक्लेशः अभविष्यत् । यतो हि अहं संस्कृतं जानामि तस्मात् तमिळ्भाषाशिक्षणे अन्यभाषा-शिक्षणे च मम असौविध्यं न भवति ।

संस्कृतस्य नाम श्रुत्वैव केचन कथयन्ति — It is a dead language. एतत् नैव सत्यम् ।

* St. James Independent School for Boys
91 Queen's Gate, London, SW7 5AB Tel: 3735638

मानव· मरणशीलः न तु संस्कृतम्। संस्कृतं तु परःसहस्रवर्षेभ्यः जीवति अनन्तकालाय जीविष्यति च। तेषाम् ईदृशं वचनं श्रुत्वा मम मनसि कापि कथा स्फुरति।

आसीत् कस्मिंश्चिद् ग्रामे कश्चिद् धनिकः। सः अत्यन्तकृपणः। तस्य कोऽपि भयङ्करः रोगः अभवत्। बहवः वैद्याः आगताः। कोऽपि तस्य रोगं निवारयितु न अशक्नोत्।

एकदा कश्चित् सन्न्यासी तस्य ग्रामम् आगतः। कृपणः सन्न्यासिनं शरणम् अगच्छत्। सः तं साष्टाङ्गं प्रणम्य प्रार्थयत—"भगवन्! कृपया मां रोगमुक्तं करोतु।"

सन्न्यासी किञ्चित्काल ध्यान कृत्वा कृपणम् अपृच्छत्—"सत्यं वद, तव किम् अतीव प्रियम्?" 'पैसा' इति कथयितुकामस्य कृपणस्य मुखात् पायसशब्दः निर्गतः। "साधु, पायसदानं कुरु। तेन त्वं रोगमुक्तो भविष्यसि" इति तत्कालं सन्न्यासी कृपणम् उपादिशत्।

अथ कृपणः सर्वान् ग्रामवासिनः न्यमन्त्रयत्। बहवः न आगताः यतो हि ते जानन्ति स्म यत् कृपणस्य भोजनेन तेषां तृप्तिः न भविष्यति। तथापि पायसलोभेन अल्पसङ्ख्यकाः जनाः तस्य गृहम् आगताः। कृपणः स्वयं परिवेषणम् अकरोत्। यदि अन्यः कोऽपि परिवेषणं कुर्यात् पायसं शीघ्रं समाप्तं भवेत् इति तस्य भयम्।

ग्रामवासिन. भोजनार्थम् उपविष्टाः। ते पायसं मुखे निवेश्य, मुखं विकृत्य आसनात् उत्थिताः। "कि जातम्? कुतः भवन्तः पायसं त्यक्त्वा गच्छन्ति" इति कृपणः व्याकुलभावेन अपृच्छत्। ग्रामवासिनः रोषपूर्णस्वरेण अवदन्—"किम् इदं भोजनयोग्यम्? छि, छि, धिक् त्वाम्, धिक् तव पायसम्।"

तदा कृपणः विनयभावेन अवदत्—"अयि भ्रातरः! अनेकपाकशास्त्राणि पठित्वा, वसुमती-तण्डुले विशुद्धदुग्धं मिश्रयित्वा, तत्र शर्कराम्, काजूतकं द्राक्षां च योजयित्वा मया स्वयं पायस रन्धितम्। मम प्रार्थनां शृणुत, कृपया खादत।"

कोऽपि तस्य प्रार्थनां न अशृणोत्। सर्वे गताः। पायसं नष्टम्। अधुना कृपणः किं कुर्यात्? यदि सः पायसं न भोजयति तर्हि सः रोगमुक्तः भवितुं न शक्नोति। अधुना तु कोऽपि तस्य गृहं न आगमिष्यति। अनया चिन्तया कृपण· म्रियमाण इव अभवत्। तस्य दुर्दशा दृष्ट्वा कोऽपि बन्धुः तं किमपि उपादिशत्। तस्य उपदेशानुसारेण कृपणः गुप्तरूपेण धनम् अददात्। बन्धुः बुद्धिशाली आसीत्। सः धनं गृहीत्वा स्वयं पायसभोजनस्य आयोजनं न अकरोत्। तस्य युवकः पुत्रः युवती पुत्री च आस्ताम्। तौ अन्य-युवकयुवतीभिः सह मिलित्वा प्रीतिभोजस्य आयोजनम् अकुरुताम्। उत्तमपाचकः आहूतः। पायसम् अतीव साधुरूपेण रन्धितम्। तत्र एलात्वक्पत्रादि-सुगन्धिद्रव्याणि अपि योजितानि। सर्वेऽपि ग्रामवासिनः आगताः। ते आनन्देन उदरपूरं च पायसम् अखादन्। तस्मात् परं सर्वे पायसस्य भूरि भूरि प्रशंसाम् अकुर्वन्। कृपणः शनैः शनैः रोगमुक्तः अभवत्।

संस्कृतं पायसवत्। अधुना बहवः जनाः संस्कृतस्य निन्दां कुर्वन्ति। अत्र जनानां न दोषः। यथा पायसकथायां कृपणः दोषी तथैव संस्कृतक्षेत्रे वयं पण्डिताः दोषभाजः। वयं पण्डिताः कृपणवत् अहङ्काररोगग्रस्ताः, स्वार्थपराः। पण्डिताः समदर्शिनः इति शास्त्रवचनम्। कुत्र अस्माकं सा समदर्शिता? कुत्र अस्माकं सा वैदिकभावना, वैदिकदृष्टिः—'मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य

चक्षुषा समीक्षामहे' इति ? कुत्र अस्माकम् इयम् उदात्तभावना ? —

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामया ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥

यदि वयं समदर्शिनः, सद्भावसम्पन्ना, स्वार्थरहिताः अभविष्याम तर्हि कोऽपि अस्माक निन्दाम्, अस्माकं कारणात् देवभाषायाः निन्दां कर्तु दुःसाहसं नैव अकरिष्यत् । वयं कृपणवत् महारोगग्रस्ताः । रोगनिवारणस्य उपाय. अस्माभि तथा कर्तव्य. यथा कृपण. अकरोत् । स्वज्ञानधनं प्रच्छन्नं दत्त्वा युवकयुवतीभिः संस्कृतामृतस्य वितरणम् अस्माभिः कारणीयम् । नान्य. पन्था विद्यते अयनाय ।

संस्कृतं कठिनभाषा इति प्रायः सर्वे वदन्ति । वस्तुतः तेषाम् इयं धारणा तथा निराधारा यथा एकस्य फलस्य विषये कस्यापि धारणा आसीत् ।

एकदा पुदुच्चेरिनगरे कोऽपि गृहस्वामी स्वपत्नीम् अवदत् — "अयि राधाम्मा ! अद्य कोऽपि अतिथिः अस्माकं गृहम् आगच्छति । तस्य जन्मस्थानं मध्यप्रदेशे । सः अत्र प्रथमवारम् आगच्छति । अतिथिदेवं किं विशेष भोजयिष्यसि ?"

पत्नी अवदत् — "विशेषभोजनम् ? सः मध्यप्रदेशात् आयाति चेत् तस्मै इट्लि, बरा, सम्बर इत्यादि दास्यामः ।" एतत् श्रुत्वा पतिः अवदत् — "अरे अद्यत्वे एतत्सर्वं कुत्र न लभ्यते ? अस्तु, त्वं यथा इच्छसि तथा कुरु । अहं तस्मै किमपि दास्यामि यत् तस्य जनपदे नास्ति ।"

बन्धुः आगतः । गमनसमये गृहस्वामी तस्मै किमपि ददानः अवदत् — "बन्धो ! एतत् गृहाण । गृहे सर्वैः खादनीयम् ।" बन्धुः तत् गृहीत्वा, हस्ताभ्याम् इतस्ततः परावर्त्य भूमौ अक्षिपत् कोपेन च अवदत् — "किं मम उपहासं करोषि ?" "न हि बन्धो ! अहं तव उपहासं न करोमि । अहं तव उपकारं करोमि" इति गृहस्वामी अवदत् । "मम उपकारं करोषि ? भोजनार्थं मह्यं काष्ठ दत्त्वा मम उपकारं करोषि ? किम् अस्माकं जनपदे काष्ठं नास्ति ?" "आम्, तव जनपदे काष्ठम् अस्ति, किन्तु इदं नास्ति । इदं न काष्ठम्, इदं फलम् । अस्य अन्तरे सुमधुरं जलम् अपि अस्ति । पश्य, दर्शयामि ।" तत्परं सः त्वचम् अपाकृत्य नारिकेलम् अत्रोटयत् । नारिकेलस्य जलं पीत्वा फलं च खादित्वा बन्धुः अतीव आनन्दितः अभवत् ।

नारिकेलवत् संस्कृतं कठिनम् इति तेषामेव प्रतिभाति ये केवलं तस्य बाह्यस्पर्शं प्राप्तवन्तः । बहुकालात् संस्कृतं कठिनम् इति धारणा प्रचलति स्म । किन्तु अधुना सा स्थितिः नास्ति इति महाकविः सुब्रह्मण्यभारतीमहोदयः अष्टाचत्वारिंशद्-वर्षेभ्यः पूर्वम् अवदत् । भारतस्य सर्वसाधारण-व्यवहारोपयोगि-संस्कृतभाषायाः शिक्षणार्थं सप्ताष्ट-मासाः पर्याप्ताः इति तस्य मतम् । कवयः क्रान्तदर्शिनः, सत्यदर्शिनः, दूरदर्शिनः । तेन महाकविना संस्कृतविषये यत् कथितं तत् सम्पूर्णतया सत्यम् । आगम्यताम्, तस्य महात्मनः वचनस्य सत्यतां प्रमाणयितुं वयं सम्भूय कार्यं कुर्याम ।

यदि वयम् एतत् न कुर्याम तर्हि अस्माकं तथा दुर्दशा भविष्यति यथा एकस्याः भगिन्याः अभवत् ।

आस्ताम् एकस्मिन् परिवारे द्वे आर्यकुलसम्भूते भगिन्यौ । एकस्याः नाम संस्कृतिः, अन्यस्याः नाम सुकृतिः । ते एकसार्थं सुखेन कालं यापयतः स्म । एकदा केनापि कारणेन तयोः मनोमालिन्यम्

अभवत् । सुकृतिः कस्यापि यवनस्य साहाय्येन संस्कृतिं गृहात् व्यद्रावयत् । संस्कृतिः गुणवती आसीत् । सा तत् स्थानं त्यक्त्वा अन्यत्र अगच्छत् । तत्र जनाः तस्याः आदर सत्कारं च अकुर्वन् । अथ सुकृतियवनयोः मध्ये भाषाम् आदाय विवादः आरब्धः । यवन सुकृतिम् अकथयत् — "त्वं मम भाषां वद ।" सुकृतिः अवदत् — "अहं किमर्थं तव भाषां वदेयम् ? मम भाषा तव भाषायाः प्राचीनतरा, समृद्धतरा ।" तदा यवनः हसन् अवदत् — "अयि मुग्धे ! तव भाषां कति जनाः वदन्ति ? तव भाषा तव राज्ये सीमिता । तत्रापि अस्माकं यवनविद्यालये तव भाषायाः स्थानम् अस्ति किम् ? कि तत्र तव भाषा पाठ्यते ? किञ्च, त्वं यदा मम गृहं गमिष्यसि तदा त्वं यदि मम भाषां न वदसि, तर्हि कोऽपि तव आदरं न करिष्यति ।"

सुकृतिः कुलीना आसीत् । तस्याः स्वभाषाया अभिमानः आसीत् । सा यवनस्य वचनं श्रुत्वा अचिन्तयत् — "एष यवनस्तु भयङ्करः ! एष कदाचित् मम सर्वनाशं कुर्यात् । अस्य सङ्गः कथमपि त्यक्तव्यः ।" तदा सा कमपि महात्मानम् अपृच्छत् । महात्मा ताम् अकथयत् — "संस्कृतिं गृहात् निष्कास्य त्वया महाप्रमादः कृतः । तां स्वगृहं प्रत्यानय । अन्यथा यवनः त्वां न मोक्ष्यति ।"

अधुना सुकृतिः किं कुर्यात् ? सा संस्कृतिं स्वगृहं प्रत्यानयेत् अथवा यवनस्य अत्याचारं नीरवं सहमाना तस्य वशवर्तिनी भवेत् ?

सुब्रह्मण्यभारतीमहोदयस्य दृष्टौ अयं प्रदेशः वेदमयः, समस्तं भारतं वेदनगरी । श्रीअरविन्दोऽपि "भवानी भारती" इति काव्ये भाविभारतस्य स्वरूपं वर्णयन् कथयति —

पुनः श्रृणोमीममरण्यभूमौ
वेदस्य घोषं हृदयामृतोत्सम् ।
सुज्ञानिनामाश्रमगा मुनीना
कुल्येव पुंसां वहति प्रपूर्णा ॥९३॥

अस्यायमर्थः — अरण्यभूमौ हृदयात् निःसृत वेदस्य अमरघोषं पुनः श्रृणोमि । पुनः परिपूर्णा मानवनदी सुज्ञानिनां मुनीनाम् आश्रमाभिमुखं प्रवहति इव । ईदृश. कालः समायाति ।

भारतस्य अधुनातन-स्थितिः सूर्योदयात् पूर्वम् अन्धकारमयी स्थितिरिव । अचिरं भारतस्य सौभाग्यरवेः उदयः भविष्यति । श्रीमाता कथयति — भारतस्य भविष्यम् अतीव स्पष्टम् । भारतवर्षः जगतः गुरुः । आगम्यताम्, भारतस्य गौरववर्धनाय वयं संस्कृतप्रतिष्ठापनयज्ञे स्व-स्व-समिधम् अर्पयेम ।

अन्ते उपसंहाररूपेण श्लोकचतुष्टयं श्रावयामि–

संस्कृतं देवभाषास्ति* वेदभाषापि संस्कृतम् ।
पृथ्व्यां स्वर्गावतारार्थं शीघ्र तत् प्रसरेद् भुवि ॥

यावज्जना न जानन्ति न भाषन्ते च संस्कृतम् ।
स्वर्गस्य रचना तावत् कथं स्याद् भुवि सम्भवा ॥

संस्कृतं जनभाषा स्याद् भारते त्वरितं यथा ।
तथा कार्यं प्रकुर्याम वयं भारतवासिनः ॥

संस्कृतं राष्ट्रभाषा स्याद् भारतस्य स्वभारती ।
श्रीमातुर्दिव्यवागेषा महीलोके महीयताम् ॥

[इद भाषणं विदुषां प्रशंसाभाजनम् अभवत् । भाषणात् परं समयम् अविगणय्य विद्वांसः सरलसंस्कृतविषये बहून् प्रश्नान् अकुर्वन् । तत्र मया तमिळ्भाषायाः संस्कृतभाषया सह

---

* म. पो. सि. महाभागाः अपि एतदेव कथयन्ति ।

अतिनिकटः सम्बन्धः लिपि-सङ्ख्या-शब्दावलि-वाक्यरचनादिदृष्ट्या प्रदर्शितः । अथ आङ्ग्ल-फ्रास-युगोस्लावियादेशाना भाषाणां धातुरूपैः सह संस्कृतधातुरूपाणां सम्बन्धोऽपि दर्शितः । भाषणात् पर "संस्कृतश्रीः" इति पाक्षिक-संस्कृतपत्रिकायाः सम्पादकः श्रीराधा-कृष्णमहोदय. माम् अवदत् — "तमिळ्भाषाया व्यवह्रियमाणानां दशसहस्रसंस्कृतशब्दानां सङ्कलनं कृत्वा अहं स्वपत्रिकायां वर्षद्वयात् प्रकाशयामि । प्रायः सहस्रं शब्दाः अधुनापि प्रकाशनार्थम् अवशिष्टाः ।" संस्कृतपण्डिताः अहङ्कारिणः, स्वार्थपराः, कुतर्कप्रवीणाः भवन्ति इति मया श्रुतम् आसीत् । किन्तु अस्मिन् विद्वत्समारोहे कस्मिन्नपि विदुषि मया तादृशः भावः लेशतोऽपि न लक्षितः ! संस्कृतं सरलं जनप्रियं च भवेत् इति सर्वे एकमतेन अभ्यलषन् । एतदर्थम् अस्माभि· कृतं क्रियमाणं च कार्यं पण्डितवर्यैः भृशं प्रशंसितम् । –नरेन्द्र.]

# ब्रह्मणः सर्वाङ्गीणस्वरूपम्

आत्मनिवेदनस्य प्रेरकं विचारसामर्थ्यं यावदेव महद् विशालं च स्यात्, साधकाय तत् तावदेव श्रेयः, तस्य उपलब्धिः सम्भवतः तावदेव पूर्णतरा प्रचुरतरा च भवेत् । यदि अस्माभिः पूर्णयोगस्य सिद्धये प्रयतनीयं तर्हि वरमेतद् यद् वयं भगवद्विषये ईदृशविचाराद् आरम्भं कुर्याम यः स्वयं पूर्णः स्यात् । हृदये भवेद् ईदृशी अभीप्सा या संकुचितसीमारहितं साक्षात्कारं सम्प्राप्तु सुतरां विशाला स्यात् । अस्माभिः न केवलं धार्मिक-साम्प्रदायिकबहिर्दृष्टिः त्यक्तव्या अपि तु ते सर्वे एकदेशीय-दार्शनिक-विचारा अपि त्याज्या ये अनिर्वचनीयभगवन्तं परिसीमक-मानसिक-सूत्रे आबद्ध कर्तुं यतन्ते । अस्माकं योगः यस्मात् शक्तिशालि-विचारात् संप्रेरकभावाद् वा श्रेष्ठतया आरब्धुं शक्नोति स स्वभावतः सर्वसमावेशि-सर्वातिशायि-अनन्तचिन्मय-ब्रह्मणो विचारो भावो वा । अस्माभिः स्वीयोर्ध्वदृष्टिः स्वतन्त्रम्, सर्वशक्तिमयम्, पूर्णम्, आनन्दमयम्, परमम्, एकं सत् एकत्वं च प्रति निधेया यस्मिन् सर्वभूतानि गतिं निवासं च कुर्वन्ति यद्द्वारा च सर्वाणि मिलित्वा एकीभवितुं शक्नुवन्ति । अयं सनातनः परमदेव. अस्माकम् आत्मनः समक्षम् आत्मानं प्रकटीकर्तुं तस्मिन् स्ववरद-हस्तं च निधातुं सममेव वैयक्तिक निर्वैयक्तिकञ्च स्वरूपं धत्ते । स वैयक्तिकः यतो हि स चिन्मयो भगवान् अनन्तः पुरुषश्च यो विश्वस्य असङ्ख्यदिव्या-दिव्यव्यक्तिषु कामपि भग्नच्छायां प्रतिक्षिपति । स निर्वैयक्तिकः यतो हि सोऽस्माकम् अनन्तः सच्चिदानन्दः प्रतिभाति यतश्च स सर्वासां सत्ताना शक्तीनाञ्च मूलस्रोतः, आधारः घटकश्च, अस्माकं सत्तायाः,— मन.प्राणदेहानाम् उपादानम्, अस्माकम् आत्मा भौतिकसत्ता च । भगवति एकाग्रतायाः अभ्यासं कुर्वते विचाराय इदमेव न पर्याप्तं यत् अयं तस्य अस्तित्वं बौद्धिकरूपेण बोधेत् अथवा तम् अमूर्तभावं तर्कसिद्धम् आवश्यकतत्त्वं वा मन्येत ।

अनेन अवश्यं द्रष्टुः विचारेण भवितव्यं यः घटघटवासिभगवता सह अत्रैव मेलितु शक्नुयात्, यः अस्मासु तं साक्षात्कर्तुं पारयेत् यश्च तस्य शक्तीनां गतेः साक्षी स्वामी च भवितुं शक्नुयात् । स एकमेव सत्, मूलभूतः विश्वव्यापी आनन्दः यस्माद् इदं सर्वं जगत् जातं यश्च अस्मात् परतः अपि वर्तते । स एकैव अनन्तचेतना या सकलचेतनाः सङ्घटयति तासां सर्वा गतीश्च अनुप्राणयति । स एकमेव, अनन्तं सत् यत् समस्तं कर्म अनुभवञ्च धारयति । तस्य सङ्कल्पः वस्तूनां विकासं तेषाम् अद्यावधि असिद्धमपि अनिवार्य लक्ष्यं पूर्णत्वञ्च प्रति नयति । तस्मै हृदयम् आत्मोत्सर्गं कर्तुं शक्नोति, परमप्रियतमरूपेण तम् उपगन्तु पारयति, प्रेम्णः सार्वभौममाधुर्यानन्दयोः सजीव-सिन्धुरूपेण तस्याभ्यन्तरे स्पन्दनं विचरणञ्च कर्तुं प्रभवति । यतो हि तस्य हर्षः स गुप्तहर्षः य आत्मने तस्य सर्वानुभवेषु आश्रयं ददाति, भ्रान्तिशीलम् अहम्भावमपि तस्य अग्निपरीक्षासु सङ्घर्षेषु च तावद् धारयति यावत् समस्तदुःखक्लेशा न विनश्यन्ति । तस्य प्रेम आनन्दश्च तस्य अनन्तदिव्यप्रेमिणः प्रेम आनन्दश्च वर्तेते यः सकलवस्तूनि तेषां मार्गेण स्वं सुखमयैकत्वं प्रति कर्षति । तस्मिन् एव सङ्कल्पः स्वम् अनेन रूपेण अविचलतया एकाग्रीकर्तुं शक्नोति यत् स खलु अदृश्यशक्तिरेका या इमं सञ्चालयति कृतार्थयति च, या च अस्य शक्तेः उद्गमः । निजनिर्वैयक्तिकस्वरूपे इद प्रेरकबलं स्वयम्प्रकाशमानशक्तिः वर्तते या सकलपरिणामान् धारयति तावच्च स्थिरतया कार्यं करोति यावत् सा तान् न संसाधयेति । स्ववैयक्तिकस्वरूपे सा योगस्य सर्वज्ञः सर्वशक्तिमांश्च ईश्वरः विद्यते यं किमपि वस्तु तस्य सङ्कल्पस्य लक्ष्यसिद्धौ बाधितुं न शक्नोति । अनयैव श्रद्धया जिज्ञासुना गवेषणा प्रयत्नश्च प्रारब्धव्यौ । अस्मिन् भूतले स्वकीयसम्पूर्णपुरुषार्थे, विशेषतया, अगोचरस्य प्राप्तेः पुरुषार्थे मनोमयमनुष्यः विवशतया श्रद्धयैव अग्रेसरः भवति । यदा स प्रत्यक्षानुभवं प्राप्स्यति तदा श्रद्धा दिव्यतया कृतार्था पूर्णा च भूत्वा ज्ञानस्य नित्यज्योतिःशिखायां परिणंस्यते ।

SABCL Vol. 20, P. 76-77 अनुवादक. — जगन्नाथः

# ऋतम्भरा प्रज्ञा

**निर्विचारवैशारद्ये अध्यात्मप्रसादः ॥**
**ऋतम्भरा तत्र प्रज्ञा ॥** —समाधिपादः, ४७-४८

अर्थः – निर्विचार-समाधौ नैपुण्यप्राप्तेः अनन्तरम् ऋतम्भरा प्रज्ञा नाम प्रसादः प्राप्यते ।

अस्मिन् मन्त्रद्वये भगवता पतञ्जलिना 'ऋतम्भरा प्रज्ञा' उदाहृता । डॉ. प. वि. वर्तक-महाशयैः "पातञ्जलयोग - विज्ञाननिष्ठ - निरूपण" इति ग्रन्थः मराठीभाषायां लिखितः । तदन्तर्गतयोः अनयोः मन्त्रयोः निरूपणस्य अयम् अनुवादः ।

### प्रज्ञा

प्रज्ञा नाम सा बुद्धिः या प्रकर्षेण जानाति । सामान्यानां बुद्धिः सामान्या एव । किन्तु असामान्य-शास्त्रज्ञानां बुद्धिः प्रज्ञा इति अभिधीयते । जगदीशचन्द्र-वसुः, (सर्) सी. वी. रमणः, आइन्स्टाइन् इति एते ख्यातकीर्तयः प्रज्ञासम्पन्नाः आसन् । लोकमान्य-तिलकः, स्वातन्त्र्यवीरसावरकरः इति एतौ प्रसिद्ध - नेतारौ प्रज्ञोपेतौ आस्ताम् । शिवाजीमहाराजः, प्रथम-बाजीरावः, नाना-फडणीसः इति ऐतिहासिक-महापुरुषाः प्रज्ञामण्डिताः आसन् । कोटिषु एकः एव इमां प्रज्ञा प्राप्नोति । प्रायः एषा जन्मजाता । केचन ताम् अनन्तरम् अधिगच्छन्ति । किन्तु तस्याः प्रभवः योगविद्या एव । सा निर्विचारसमाधितः एव प्राप्यते । लब्धप्रज्ञस्य बुद्धिः सामान्यानां बुद्धेः कुशाग्रतरा ।

### ऋतम्भरा (प्रज्ञा)

यस्याम् 'ऋतम्' पूरितं भवति सा प्रज्ञा ऋतम्भरा नाम । नैके मन्यन्ते यत् सत्यं च ऋतं च इति एतौ समानार्थकौ शब्दौ । 'ऋतं वच्मि', 'सत्यं वच्मि' इति इयं शब्दरचना श्रीगणेश-अथर्वशीर्षे अन्यस्तोत्रेषु च प्रयुक्ता । ऋतं सत्यं च इति एतौ शब्दौ समानार्थौ अभविष्यतां चेत् स्तोत्राणां रचनाकाराः तौ नैव सविच्छेदम् उपायोक्ष्यन्त । तयोः अर्थौ भिन्नौ, अत एव तयोः युगपत् संयोजना । 'सत्यम्' इति अस्मिन् शब्दे 'अस्'धातुः विद्यते । यत् सततं चिरन्तनं च अस्ति तत् सत्यम् । यत् अद्य अस्ति किन्तु श्वः न भवेत् तत् नैव सत्यम् । यद् अद्य अस्ति, अब्जावधि-संवत्सरेभ्यः प्राक् आसीत्, अब्जावधि-संवत्सरेभ्यः अनन्तरं च भविष्यति तत् सत्यम् ।

'ऋतम्' इति अयं शब्दः 'ऋ' इति गत्यर्थक-धातो. व्युत्पन्नः । अतः यद् अधुना अस्ति किन्तु अनन्तरं भविष्यति न वा इत्यस्मिन् विषये न किमपि ध्रुवत्वं तद् ऋतं नाम । तद् अधुना अस्ति किन्तु अतः परं कदाचित् विलुप्तं दृश्येत । यत् अधुना अस्ति पश्चात् तु न भविष्यति तत् असत्यम् इति कथं वदेम ? एतत् सत्यं यत् तत् वर्तमानकाले विद्यते । तस्मात् तत् नास्ति इति असत्यम्, नहि सत्यं नाम नित्यस्थायि । इदम् 'ऋतम्' इति अभिधीयते । कस्यचित् शरीरभारः पुण्यपत्तने १६६ पौण्ड्मितः अस्ति । सः उत्तरध्रुवे १६७ पौण्ड्मितः, चन्द्रभूमौ च २८ पौण्ड्मितः भविष्यति । अस्य अयम् अर्थः यत् परिस्थितेः परिवर्तनात् शरीरभारे व्यतिरेकः भवति । तस्मात् मूलतः सत्येभ्यः किन्तु परिवर्तिभ्यः वस्तुभ्यः अस्माकं पूर्वजैः 'ऋतम्' इति संज्ञा प्रदत्ता । ऋतं वचनं न पापात्मकम्, असत्यवचनं तु पापकरम् ।

'ऋतम्' इति शब्दः गतिं प्रकटयति । अत एव गतियुक्तस्य तत्त्वस्य 'ऋतम्' इति संज्ञा । ऋति-शब्दस्य गतिः इति अर्थः शब्दकोशात् प्राप्यते । किन्तु

स शब्द स्त्रीलिङ्ग. ऋतं च नपुंसकलिङ्गम् । ईदृशी गतिपूर्णा प्रज्ञा, अत्यन्तकुशाग्रा बुद्धिः एव ऋतम्भरा प्रज्ञा । तस्याः केवलं कुशाग्रबुद्धि. इति अय बाह्यार्थ. नैव करणीयः । यतः स्तेनस्य बुद्धिः अपि कुशाग्रा । तस्याः ऋतम्भरा प्रज्ञा इति नाम्ना सम्बोधनम् अनुचितं भवेत् । 'ऋतम्' खलु गति-युक्तम् । किन्तु अवधेयं यत् तत् नैव कदाचन असत्यम् । अत्यन्तकुशाग्रा बुद्धिः सत्यानुवर्तिनी चेत्, तर्हि एव ताम् उद्दिश्य ऋतम्भरा प्रज्ञा इति अयं शब्दप्रयोगः करणीयः । राजनीतौ असत्यस्य प्रभावः गरीयान् । तस्मात् राजनीतिनिपुणस्य कुशाग्रा बुद्धिः 'ऋतम्भरा प्रज्ञा' इति नामधेयं न अर्हति । ऋतम्भरा प्रज्ञा अध्यात्मतः एव प्रसादरूपेण प्राप्यते । येन सा लब्धा तस्य न कोऽपि अविषयः । तस्य न किमपि गहनं न वा अनाकलनीयम् ।

भारतीय-ऋषिभिः ये ये आविष्काराः कृता. तेषां प्रभवः ऋतम्भरा प्रज्ञा एव । उदाहरणार्थम् —

शून्यस्य आविष्कारः ।

गणितशास्त्र भारते एव प्रगतम् आसीत् । यूनानीयाः यदा अयुतं यावत् सङ्ख्या जानन्ति स्म तदा अस्माकम् ऋषीणां परार्धपर्यन्त-सङ्ख्यानां परिचय आसीत् ।

श्वेत:, श्यामः तीव्रः च इति नामभिः महाभारते व्यासेन व्याख्याताः अनुक्रमेण युरेनस्-नेप्चून्-प्लेटो इति एते एव ग्रहाः आसन् इति एतत् ग्रन्थलेखक-वर्तकमहाशयैः गणिताधारेण प्रमाणीकृतम् । पाश्चात्यशास्त्रज्ञैः एते ग्रहाः बृंहणयन्त्रसाहाय्येन प्रज्ञया आविष्कृताः । ते च व्यासेन सार्धसप्तसहस्रवर्षेभ्यः प्राक् ऋतम्भराप्रज्ञया अवगताः आसन् ।

आधुनिक-शास्त्रज्ञाः 'को नाम जीवः' इति सम्यक् न जानन्ति । किन्तु प्राचीनऋषिभिः न केवलं जीव' अपि तु अज्ञेयः आत्मा अपि लीलया संशोधितः तथा च अणुपरमाणवः ।

मुण्डकोपनिषदा अग्नेः सप्त जिह्वाः नाम सप्तशक्तयः वर्णिताः ।

प्रश्नोपनिषदा गुरुत्वाकर्षणम् एका शक्तिः इति उदाहृतम् ।

ऐतरेय-भागवत-ग्रन्थयोः गर्भशास्त्रं निगदितम् ।

आधुनिक - विज्ञानेन १९३५तम - ख्रिस्ताब्दे संशोधितं यत् कर्णयोः संस्थितेन साधनेन दिशानाम् अवबोधः भवति । तत् संशोधनम् अस्माकम् ऋषिभिः अयुतवर्षेभ्यः प्राक् कृतम् आसीत् ।

मानव-गर्भस्य हृदयं द्वितीय-मासान्ते स्पन्दनम् आरभते इति संशोधनं 'डायसोनो ग्राफ्' इत्यस्य यन्त्रस्य साहाय्येन १९७२तम - ख्रिस्ताब्दे जातम् । किन्तु तत् ऐतरेय - भागवत - ग्रन्थयोः निर्दिष्टम् अस्ति ।

संगीतस्य सप्तस्वराः सन्ति । तेषु अन्तर्भूतः 'सः' नाम षड्जः अन्येषां षट्-स्वराणां निर्माता । संगीतस्य मनसि ध्वनेः च वातावरणे प्रभावः भवति, दीपरागेण दीपाः प्रज्वलन्ति, मेघमल्लार-रागेण पर्जन्यवृष्टिः भवति इति एतानि संशोधनानि अस्माकम् ऋषिभिः ऋतम्भरया अनुष्ठितानि ।

आकाशस्थ - ग्रहाणां मनुष्येषु पृथिव्यां च प्रभावः भवति ।

भृगुसंहितायाम् अद्यतन - मानवस्य भविष्यं द्विसहस्रवर्षेभ्यः प्राक् यथावत् कथितम् ।

विश्वस्य उत्पत्तिः कथं जाता इति ऋग्वेदान्तर्गते नासदीय-सूक्ते उदाहृतम् । प्रगत-उपकरण-साहाय्येन आधुनिकशास्त्रज्ञैः व्याख्यातः

सिद्धान्तः नासदीय-सिद्धान्तसमः एव। तदानी नैव आसन् साहाय्यकारीणि उपकरणानि, किन्तु आसीत् केवलम् 'ऋतम्भरा प्रज्ञा'।

**सामान्या प्रज्ञा ऋतम्भरा प्रज्ञा च**

एतयोः मध्ये अतिमात्रः भेदः वर्तते। सामान्या प्रज्ञा पञ्चज्ञानेन्द्रियाणि आश्रयते। तया कृतस्य अनुमानस्य आधारः अस्ति पञ्चभ्यः ज्ञानेन्द्रियेभ्यः प्राप्तं ज्ञानम्। ऋतम्भरा प्रज्ञा तु ज्ञानेन्द्रियाणां साहाय्यात् विना कार्यं करोति। तस्याः आधारः अस्ति आत्मा।

— ग. श. कुलकर्णी, अन्धेरी-मुम्बई

# तपःफलम्

रामेश्वरः संस्कृतज्ञः। स सर्वदा स्वाध्याय करोति। यदृच्छया यल्लभ्यते तेन स सन्तुष्टः। न तस्य स्पृहा धने यदर्थं स प्रयतेत। तस्य भार्या छायेव तदनुसारिणी। तस्य सुतोऽपि विनयान्वितः सदा पितरौ एव अनुसरति। ग्रामीणाः सर्वे तेषु प्रसन्नाः।

कामेश्वरः तत्पार्श्वे वसति। सोऽपि संस्कृतम् अधीतवान्। किन्तु पुनरवलोकनं तेन न कृतमिति सर्वं तस्य विस्मृतप्रायम्। स महोत्साहो महोद्यमशीलश्च। धनिकस्य तस्य वसनं सुन्दरम्, भवनं सुन्दरम्, सर्वं सुन्दरम्। ग्रामे तस्यास्ति महानादरः। सर्वे गुणाः काञ्चनम् आश्रयन्ति !

एकदा महती वृष्टिरभवत्। सम्पूर्णग्रामः जलमयः संवृत्तः। वीथीषु सर्वत्र जलमेव वहति स्म। येषां गृहं सम्यक् आच्छादितम्, त एव वह्निं प्रज्वलय्य प्रावरणेन आत्मानं संवृत्य सुखेन स्थिताः। अन्ये तु देवेन्द्रं वृष्टिशान्त्यै प्रार्थयमानाः कथमपि समयं यापयन्तः स्रवज्जलां पर्णशालां पश्यन्तः तिष्ठन्ति स्म।

दिनद्वयं निरन्तरं वृष्टिरभवत्। रामेश्वरस्य कुटी जलेन नष्टप्राया नाममात्रा च। स पत्न्या पुत्रेण च सह कामेश्वरस्य भवनम् अगच्छत्। तत्र कथञ्चित् स वृष्टेरन्तं यावत् अतिष्ठत्। ततः स यद्यपि स्वस्थानम् आगतः तथापि क्लिन्नं वस्तुजातं प्रयोक्तु न प्राभवत्। तस्य स्थितिः शोचनीया जाता। तस्य भार्यापुत्रौ ज्वरग्रस्तौ। अशरणो रामेश्वरः परमेश्वरं शरणम् अगच्छत्।

रामेश्वरस्य प्रार्थनां कैलासवासी शङ्करः अश्रृणोत्। तस्य निःसहायताम् अनन्यभावनाञ्च भगवान् अजानात्। दयार्द्रहृदयः स तस्य पुरस्तात् आविर्भूतः। रामेश्वरः तं साक्षात्कृत्य स्वात्मानं धन्यम् अमन्यत। पुनः पुनर्महादेवेन पृष्टोऽपि स भक्तिम् एव अयाचत, नान्यत् किञ्चित्। किन्तु करुणावरुणालयो मृत्युञ्जयो भक्तकाङ्क्षां जानन् भस्मपिण्डत्रयं प्रायच्छत् उपादिशच्च —

"राम ! भस्मपिण्डत्रयमिदं सर्वेप्सितं दास्यति। पूजान्ते मनसि अभीष्टं सङ्कल्प्य यदीदं भञ्जयसि तर्हि वाञ्छितं प्राप्स्यसि। तव नास्ति गृहम्, वस्त्रम्, अन्नपानादिकं सम्प्रति। तदस्य सदुपयोगं कुरु।" एतद् उक्त्वा सः अन्तर्हितः।

रामेश्वरः परमानन्दतुन्दिलः सर्वं वृत्तान्तं पत्न्यै न्यवेदयत्। शङ्करस्य प्रसादेनैव सा पुत्रेण

सह स्वस्था अभवत् । प्रसन्नमना रामः प्रदोषे शिवम् अपूजयत् पूजान्ते च "सुन्दरं मन्दिरं मेऽस्तु" इति उक्त्वा शिवदत्तं भस्मपिण्डम् अभञ्जयत् । अहो, परमाद्भुतम् ! स तस्मिन् प्रासादे आसीत् यस्य रामणीयकं वर्णयितु शेष एव शक्नुयात् ।

हर्षं हर्षं रामो द्वितीयेन भस्मपिण्डेन भाविभाग्यम् अशनवसनादिकं तृतीयेन च निश्चलां भगवद्भक्तिम् असाधयत् । तेन परोक्षप्रियः शङ्करः पुनरपि प्रसन्नः । अहो, प्रसमीक्ष्यकारिता पण्डितपुण्डरीकस्य ! अत एव हि साधूक्तम् —

"न पण्डिताः साहसिका भवन्ति
विमृश्य कुर्वन्ति सदैव कार्यम् ।"

परेद्युः प्रभाते सर्वे ग्रामीणा विस्मयेन रामभवनमागत्य वृत्त व्यचारयन् । शिवप्रसादात् इदं सर्वं जातम् इति ज्ञात्वा सर्वे चकिताः । रामं प्रति पूर्वमेव सर्वे प्रसन्नमनसः आसन् । सम्प्रति तु स सर्वेषाम् आदरभाजनम् अभवत् ।

पार्श्ववर्ती कामेश्वरोऽपि सर्वमिदं ज्ञातवान् । तस्य मनसि प्रथमं विस्मय आसीत् अनन्तरञ्च शनैः असूया उत्पन्ना । सर्वे रामं बहु मन्यन्ते इति दृष्ट्वा स सचिन्तः । तद्वदेव परमेश्वरवरप्राप्तौ तादृशं सम्मानं प्राप्तुं शक्यमिति स तदर्थम् उद्युक्तः । नातिचिरेण तेन भगवानपि साक्षात्कृतः । किन्तु हन्त ! रामाय इव भस्मपिण्डत्रयस्य दानाय स शङ्करं प्रार्थयत । देवः प्राहसत्, भस्मपिण्डत्रयम् अयच्छत्, पूर्ववदेव काङ्क्षितं साधयितुं व्यवृणोत् ।

कामेश्वरः प्रदोषे स्नात्वा शिवपूजाम् उपाक्रमत । तस्य मनः पूजापेक्षया कामप्राप्तौ एव विहरति स्म । कथञ्चिद् यान्त्रिकपूजा प्रचलति स्म । तदा तस्य वृद्धमाता तत्रागता । सा बहुवर्षाणि पूजासक्त पुत्रं नापश्यत् । कुतूहलेन सा अपृच्छत् —

"पुत्र ! किमद्य पूजा क्रियते ?"

"तेन ते किम् ?" असहमानः कामेश्वरः प्रत्यवोचत् ।

"अत्र किमिदम् ?" भस्मपिण्ड परामृशन्ती माता पृष्टवती ।

"कि न दृश्यते ?" क्रोधेन पुनः अपृच्छत् कामेश्वरः । तस्य मातुरुपरि स्नेहोऽपि नासीत्, का कथा भक्तेः ! माता उवाच —

"दृश्यते । भस्मपिण्डत्रयम् । किं पूजार्थम् इदम् आवश्यकम् अथवा रामेश्वरवदेव भवेयम् इत्यालोच्य दम्भोऽयम् आरब्धः ?"

अनेन पुत्रः क्रोधस्य परां काष्ठां प्राप्नोत् । स उच्चैः आक्रोशत् — "तव शिरः" ।

तदा अकस्मात् भस्मपिण्डे तस्य हस्तः पतितः तच्च भग्नम् । अहो सर्वत्र तस्य मातुः शिरासि दृश्यन्ते स्म ! तद्दृष्ट्वा सर्वे भीताः । कामेश्वरोऽपि भीतः सर्वत्र पिशाचक्रीडामिव शिरसां चलनम् अपश्यत् । तन्निवारयितुं शीघ्रं स भस्मपिण्डमेव शरणं गतः । आर्तः स गद्गदस्वरेण परमेश्वरं स्मरन् प्रार्थयत —

"भगवन् ! किमिदं संवृत्तम् ? परितो भूतचेष्टेव मातुः शिरांसि माम् उपहसन्ति । तत् कृपया तान्यपनुद्य मां रक्ष" इति उक्त्वा स अन्यत् भस्मपिण्डम् अभञ्जयत् ।

शिरासि अन्तर्लीनानि । कामेश्वरः समाधानेन निश्वसन् पश्यति — मातुरपि शिरो नास्ति !

तद् दृष्ट्वा तस्य भार्यापुत्रौ भीतौ अवोचताम्—"शीघ्रं मातुः शिरः प्रार्थ्यताम् । नो चेत्... अहो कष्टम् !"

पुनः परमेश्वरं प्रार्थयमानः कामेश्वरः "मातुरेक शिरोऽस्तु" इति सङ्कल्प्य शिष्टमेकं भस्मपिण्डं प्राहरत् । महादेवस्य करुणया वृद्धमाता यथापूर्वं समवर्तत ।

अनया घटनया कामेश्वरः खिन्नः । शम्भोर्वरं प्राप्य स यत् चिकीर्षति स्म तत् न पूर्णम् । "प्राप्तव्यमर्थं लभते मनुष्य." इति चिन्तयन् पुनः किमप्यकृत्वा स शङ्करस्य भक्तो जातः ।

—सूर्यनारायणनागेन्द्रभट्टः

# गीतायाः भूमिका

## शिक्षार्थम् अर्जुनस्य प्रार्थना

अर्जुनः श्रीकृष्णस्य उक्तेः उद्देश्यं बोद्धुम् अशक्नोत् । सः राजनैतिकाक्षेपात् व्यरमत् किन्तु तस्य अन्ये ये आक्षेपाः आसन्, तेषां किमपि उत्तरं न प्राप्य सः शिक्षार्थं श्रीकृष्णं शरणम् अगच्छत् । सः अवदत्, "अहं क्षत्रियः इति स्वीकरोमि । कृपायाः वशवर्ती सन् महतः कार्यात् विरामः मदर्थं क्लीबत्वसूचकः, अकीर्तिजनक· स्वधर्मविरुद्धश्च । किन्तु मम मनः प्राणश्च न बोधतः । मनः कथयति—गुरुजनानां हत्या महापापम् । निजसुखस्य अर्थे गुरुजनानां हत्यया अधर्मग्रस्तस्य मम धर्मः, मोक्षः, परलोकः, यत् वाञ्छनीय तत् सर्वमपि नंक्ष्यति । कामना तृप्ता भवेत्, अर्थस्पृहा तृप्ता भवेत्, किन्तु सा कियत्कालम् ? अधर्मलब्धः भोग. प्राणत्याग यावत् स्थायी । तत्परम् अकथनीया दुर्गतिः भवति । किञ्च भोगसमये भोगेषु गुरुजनानां रक्तस्य आस्वादेन कीदृशं सुखं शान्तिः वा लभ्येत ? प्राणः वदति—एते अस्माक प्रियजनाः । एतान् हत्वा अहम् अस्मिन् जन्मनि सुखभोगं कर्तुं न शक्नोमि, जीवितुमपि न इच्छामि । यदि मह्यं त्वं समस्तपृथिव्याः साम्राज्यभोगं दद्याः, स्वर्गजयेन इन्द्रस्य ऐश्वर्य-भोगं वा दद्याः तथापि अहं न भोक्ष्यामि । यः शोकः माम् अभिभविष्यति, तेन अभिभूतानि अवसन्नानि च मम सर्वाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च स्व-स्व-कार्ये शिथिलानि असमर्थानि च स्युः । तदा अहं कीदृशं भोगं करिष्यामि ? मम विषमचित्तस्य दीनता उपस्थिता, महान् क्षत्रियस्वभावः तस्यां दीनतायां मग्नः । अहं त्वा शरणं गच्छामि । मह्यं ज्ञानम्, शक्तिम्, श्रद्धा देहि, श्रेय.पथं दर्शयित्वा मां रक्ष ।"

भगवतः निकटे सम्पूर्णतया शरणागतिः गीतोक्तयोगस्य मार्गः । इयम् आत्मसमर्पणम् आत्मनिवेदनं वा कथ्यते । यः भगवन्तं गुरुम्, प्रभुम्, सखायम्, मार्गप्रदर्शकं मत्वा सकलधर्मेभ्य· जलाञ्जलिं दातु प्रस्तुतः, पापं पुण्यम्, कर्तव्यम् अकर्तव्यम्, धर्मम् अधर्मम्, सत्यम् असत्यम्, मङ्गलम् अमङ्गलम् अविचार्य यः स्वकीयं ज्ञानम्, कर्म, साधनायाः समस्तं भारं च श्रीकृष्णाय अर्पयति सः गीतोक्तयोगस्य अधिकारी । अर्जुनः श्रीकृष्णम् अवदत्—यदि त्वं मा 'गुरुहत्यामपि कुरु' इति कथयेः, तदेव तव धर्मः, कर्तव्यकर्म इति मां

बोधये, अहं तदेव करिष्यामि। अस्याः गभीरश्रद्धायाः हेतो. अर्जुन· समसामयिकान् सकलमहापुरुषान् अतिक्रम्य गीतोक्तशिक्षायाः श्रेष्ठपात्ररूपेण गृहीतः अभवत्।

उत्तरेण श्रीकृष्णः प्रथमम् अर्जुनस्य आक्षेपद्वय खण्डयित्वा, तदनु गुरोः भारं गृहीत्वा तस्मै यथार्थज्ञानं दातुम् आरभत। द्वितीयाध्यायस्य ३८तमश्लोक यावत् आक्षेपखण्डनम्, तत्परं गीतोक्त-शिक्षायाः आरम्भः। किन्तु अस्मिन् आक्षेपखण्डने कतिचित् अमूल्यशिक्षाः प्राप्यन्ते यासां बोधस्य अभावे गीतायाः शिक्षा हृदयङ्गमा न भवति। एते विषया. विस्तरेण आलोचनीयाः।

**सञ्जय उवाच**

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥

एवम् उक्त्वा परन्तपः, गुडाकेशः हृषीकेशं गोविन्दं न योत्स्ये इति उक्त्वा तूष्णीं बभूव ह।

सञ्जयः अवदत् —

परन्तपः (शत्रुसन्तापकारी), गुडाकेशः (निद्रा-जयी) [अर्जुन.] हृषीकेशं गोविन्दम् (श्रीकृष्णम्) इदं कथयित्वा पुनः अवदत्, "अहं युद्ध न करिष्यामि।" तत्परं सः नीरवः अतिष्ठत्।

तमुवाच हृषीकेशः प्रहसन्निव भारत।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥

हे भारत ! हृषीकेशः उभयो. सेनयोः मध्ये विषीदन्तं तं प्रहसन् इव इदं वच. उवाच।

श्रीकृष्णः ईषद् हसन् द्वयोः सेनयोः मध्यस्थले विषण्णम् अर्जुनम् इदम् उत्तरयामास।

**श्रीभगवानुवाच**

अशोच्यानन्वशोचस्त्व प्रज्ञावादांश्च भाषसे।
गतासूनगतासूश्च नानुशोचन्ति पण्डिताः ॥११॥

त्वम् अशोच्यान् अन्वशोचः प्रज्ञावादान् च भाषसे। पण्डिताः गतासून् अगतासून् च न अनुशोचन्ति।

भगवान् अवदत् —

"येषाम् अर्थे शोकस्य किमपि कारणं नास्ति तेषाम् अर्थे त्वं शोकं करोषि, अथ च ज्ञानिवत् तत्त्ववचनम् उपजीव्य वादविवादान् कर्तुं चेष्टसे। किन्तु ये तत्त्वज्ञानिन· ते मृतानां जीवितानां वा अर्थे शोकं न कुर्वन्ति।"

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥

न तु एव अहं जातु न आसम्, न त्वम्, न इमे जनाधिपाः [न आसन्] न च एव वयम् अतः परं न भविष्याम.।

अहं पूर्वं न आसम्, त्वं न आसीः, इमे नृपतयोऽपि न आसन् इति न। (वयं सर्वेऽपि पूर्वम् आस्म इति अर्थः।) देहत्यागात् परं वयं न भविष्यामः इति न। (देहत्यागात् परं वयं सर्वेऽपि भविष्यामः इति अर्थः।)

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥

यथा अस्मिन् देहे देहिनः कौमारम्, यौवनम्, जरा [भवति] तथा देहान्तरप्राप्तिः [अपि भवति]। तत्र धीरः न मुह्यति।

यथा अस्मिन् जीवाधिष्ठितदेहे बाल्यम्, यौवनम्, वार्धक्यं कालक्रमेण भवति, तथैव देहान्तरप्राप्तिरपि। तेन स्थिरबुद्धिः ज्ञानी विमूढः न भवति।

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४॥

हे कौन्तेय ! हे भारत ! मात्रास्पर्शाः तु शीतोष्णसुखदुःखदाः, आगमापायिनः, अनित्याः । तान् तितिक्षस्व ।

मरणं हि न किमपि । येन विषयस्पर्शेन शीतम्, उष्णम्, सुखम्, दुःखम् इत्यादयः संस्काराः जायन्ते सः स्पर्शः अनित्यः, सः आयाति याति च । अविचलितः सन् तस्य सहनस्य अभ्यासं कुरु ।

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

हे पुरुषर्षभ ! एते [मात्रास्पर्शाः] यं समदुःखसुखम्, धीरं पुरुषं न व्यथयन्ति स हि अमृतत्वाय कल्पते ।

यः स्थिरबुद्धिः जनः इमान् स्पर्शान् भुक्त्वा व्यथितः न भवति, सुखं दुःखं च समभावेन गृह्णाति, स एव मृत्युं जेतुं समर्थः ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

असतः भावः न विद्यते, सतः अभावः न विद्यते । तत्त्वदर्शिभिः अनयोः उभयोः अपि अन्तः तु दृष्टः ।

यत् असत् तस्य अस्तित्वं न भवति, यत् सत् (यत् अस्ति) तस्य विनाशः न भवति, तथापि सत्, असत् इति अनयोः अन्तः (सिद्धान्तः) वर्तते । सः तत्त्वदर्शिभिः दृष्टः ।

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥१७॥

येन इदं सर्वं ततं तत् तु अविनाशि विद्धि । अस्य अव्ययस्य विनाशं कश्चित् कर्तुं न अर्हति ।

किन्तु यः आत्मा इदं दृश्यजगत् स्वस्मिन् विस्तारितवान्, सः क्षयं न याति, कोऽपि तस्य ध्वंसं कर्तुं न शक्नोति ।

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥१८॥

अनाशिनः, अप्रमेयस्य, नित्यस्य शरीरिणः इमे देहाः अन्तवन्तः उक्ताः । तस्मात् हे भारत ! युध्यस्व ।

आत्मा असीमः, अनश्वरः (अविनाशी) । नित्यम् आत्मानं धारयताम् एषां देहानाम् अन्तः भवति । अत एव हे भारत, युद्धं कुरु ।

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥

यः एनं हन्तारं वेत्ति यः च एनं हतं मन्यते, तौ उभौ न विजानीतः—अयं न हन्ति, न हन्यते ।

आत्मा हन्ता (हत्याकारी) इति यः वदति, किञ्च देहनाशेन आत्मा निहतः भवति इति यः बोधति—तौ द्वौ अपि भ्रान्तौ, अज्ञौ । अयम् आत्मा हत्यां न करोति, हतोऽपि न भवति ।

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥२०॥

अयं कदाचित् न जायते म्रियते वा, न अयं भूत्वा भूयः न भविता वा । अजः, नित्यः, शाश्वतः, पुराणः अयं शरीरे हन्यमाने न हन्यते ।

अस्य आत्मनः जन्म नास्ति, मृत्युरपि नास्ति,

तस्य कदापि उद्भवः नास्ति, विनाशोऽपि न भविष्यति । सः जन्मरहितः, नित्यः, सनातनः, पुरातनः, देहनाशेन अहतः ।

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२१॥

हे पार्थ ! यः एनं नित्यम्, अविनाशिनम्, अजम्, अव्ययं वेद स पुरुषः कं घातयति, कं हन्ति ?

यः एनम् [आत्मानम्] नित्यम्, अनश्वरम्, अक्षयं जानाति सः पुरुषः कथं कस्यापि हत्यां करोति कारयति वा ?

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥२२॥

यथा नरः जीर्णानि वासांसि विहाय अपराणि नवानि गृह्णाति तथा देही जीर्णानि शरीराणि विहाय अन्यानि नवानि संयाति ।

यथा मनुष्यः पुरातनं वस्त्रं त्यक्त्वा अन्यत् नूतनं वस्त्रं गृह्णाति तथैव जीवः पुरातनशरीर त्यक्त्वा अन्यत् नूतनं शरीरम् आश्रयते ।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥

शस्त्राणि एनं न छिन्दन्ति, पावकः एनं न दहति, आपः एनं न क्लेदयन्ति मारुतश्च [एनम्] न शोषयति ।

शस्त्राणि एनम् [आत्मानम्] छेत्तुं न शक्नुवन्ति, अग्निः दग्धुं न शक्नोति, जलम् आर्द्रयितुम्, वायुः शोषयितुं न शक्नोति ।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२४॥

अयम् अच्छेद्यः, अयम् अदाह्यः, अयम् अक्लेद्यः अशोष्यः च एव । अयं नित्यः, सर्वगतः, स्थाणुः, अचलः, सनातनः ।

आत्मा अच्छेद्यः, अदाह्य', अक्लेद्यः, अशोष्यः, नित्यः, सर्वव्यापी, स्थिरः, अचलः, सनातनः ।

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥

अयम् अव्यक्तः, अयम् अचिन्त्यः, अयम् अविकार्यः उच्यते । तस्मात् एनम् एवं विदित्वा [त्वम्] अनुशोचितु न अर्हसि ।

आत्मा अव्यक्तः, अचिन्त्यः, विकाररहितः । त्वम् आत्मानम् ईदृशं ज्ञात्वा शोकं परित्यज ।

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥२६॥

अथ [त्वम्] एनं नित्यजातं नित्य मृतं वा मन्यसे [चेत्] तथापि हे महाबाहो ! त्वम् एनं शोचितु न अर्हसि ।

अथ जीवः वारंवारं जायते, म्रियते इति त्वं मन्यसे चेत्, तस्यार्थे तव शोकः न उचितः ।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥

जातस्य मृत्युः ध्रुवः मृतस्य च जन्म ध्रुवम् । तस्मात् अपरिहार्ये अर्थे त्वं शोचितु न अर्हसि ।

यस्य जन्म भवति तस्य मरणं निश्चितम्, यस्य मरणं भवति तस्य जन्मापि सुनिश्चितम् । अत एव यदा मृत्युः अपरिहार्यः परिणामः, तदा तस्यार्थे शोकः अनुचितः ।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥

हे भारत ! भूतानि अव्यक्तादीनि, व्यक्त-मध्यानि, अव्यक्तनिधनानि एव । तत्र का परिदेवना ?

सर्वे प्राणिनः प्रारम्भे अव्यक्ताः तिष्ठन्ति, मध्ये व्यक्ताः भवन्ति, पुनः अव्यक्ताः जायन्ते । अस्य स्वाभाविकक्रमस्य अर्थे शोकः न करणीयः ।

आश्चर्यवत् पश्यति कश्चिदेन-
माश्चर्यवद् वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२९॥

कश्चित् एनम् आश्चर्यवत् पश्यति, तथैव च अन्यः आश्चर्यवत् वदति, अन्यः च आश्चर्यवत् शृणोति, कश्चित् च एव एनं श्रुत्वा अपि न वेद ।

कोऽपि आत्मानम् आश्चर्यकर-वस्तुवत् पश्यति, अन्यः कोऽपि तस्य विषये आश्चर्यकर-वस्तुवत् वदति । अपरः कश्चित् तस्य विषये आश्चर्यकर-वस्तुवत् शृणोति । किन्तु कश्चित् आत्मान श्रुत्वापि ज्ञातुं न पारयति ।

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

हे भारत ! सर्वस्य देहे अयं देही नित्यम् अवध्यः । तस्मात् त्वं सर्वाणि भूतानि शोचितुं न अर्हसि ।

आत्मा सर्वदा सर्वशरीरेषु अवध्यतया तिष्ठति । अत एव एषां प्राणिनाम् अर्थे त्वया शोकः कदापि न कर्तव्यः ।

(श्रीअरविन्दस्य 'मूलबङ्गलारचनावलि'तः अनूदितः अयं विषयः । तत्र श्लोकानाम् अन्वयः अस्माभिः पाठकानां सुविधार्थं योजितः । –सं०)

---

**भारतस्य देवालयाः**

# कामाक्षामन्दिरम्

कामाक्षादेव्याः मन्दिरस्य विषये शतशः लोककथाः सन्ति । तदनुसारेण कोऽपि साधारण-जनः तस्याः वासस्थानम् उपगन्तुं न शक्नोति । केवलम् ऐन्द्रजालिकाः तान्त्रिकाश्च अभिमन्त्रितान् उड्डयनशील-वृक्षान् आरुह्य रात्रौ तत्र गन्तु शक्नुवन्ति । तत् स्थानं भूतपिशाचैः परिवृतम् आसीत् ये मनुष्यान् बहुशः पीडयन्ति स्म । यः तेषां भयावहप्राणिनां साम्मुख्यं कर्तुं दुःसाहसम् अकरोत् स एव मन्दिरं प्रविश्य देवी पूजयितुम् अशक्नोत् । देव्यां प्रसन्नायां साधकः बहूनाम् अलौकिक-शक्तीनाम् अधीश्वरः भवितुम् अर्हति चमत्कारान् च कर्तु शक्नोति ।

यद्यपि कामाक्षादेवी तान्त्रिकविश्वासैः सह सम्बद्धा तथापि सा स्वसत्यनिष्ठ-साधकान् अतीन्द्रियानुभवान् कारयति । भारते मातृ-देवतायै उत्सृष्टेषु प्रधान-मन्दिरेषु कामाक्षामन्दिरम् अन्यतमम् । मन्दिरस्य निर्माणविषये बहवः लौकिक-पौराणिक-कथाः सन्ति । जनानाम् अयं साधारणविश्वासः यत् विष्णोः सुदर्शनचक्रेण कृत्तः शिवस्य पत्न्याः सतीदेव्याः मृतशरीरस्य

अंशविशेषः यत्र अपतत् तत्र इदं मन्दिरं निर्मितम् इति ।

आदिमन्दिरस्य निर्माता कः इति न ज्ञायते । किन्तु षोडशशताब्द्यां धर्मान्धः कलापाहाडः मन्दिरस्य ध्वंसम् अकरोत् ।

अथ असमदेशस्य कोकराजः मल्लदेवः बङ्गदेशं विजेतुम् अभियानम् अकरोत् । बङ्गसुलतानस्य मल्लदेवस्य च युद्धे मल्लदेवः दुर्विधम् आहतः । तस्य भ्रातरं शुक्लदेवं सुलतानः बन्दिनम् अकरोत् ।

एकदा रात्रौ शुक्लदेवः स्वप्ने कामाक्षाम् अपश्यत् । सा तम् अवदत्—"भग्नावस्थायां देवीमन्दिरं त्यक्त्वा युष्माभिः युद्धं न करणीयम् आसीत् । अचिरं सुलतानस्य सर्पदष्टमातरं निरामयां कृत्वा त्वं मुक्तः भविष्यसि ।"

सुलतानस्य मातरं निरामयां कर्तुं सर्वेषु प्रयासेषु विफलेषु शुक्लदेवः आहूतः । कामाक्षा-प्रसादेन सः कृतकार्यः मुक्तश्च अभवत् ।

शुक्लदेव. मल्लदेवश्च पुरातनमन्दिरस्य ध्वंसावशेषस्थले नूतनमन्दिरस्य निर्माणाय तत्परौ अभवताम् । घृतसिक्ताभिः इष्टकाभिः इदं मन्दिरं निर्मितम् इति कथ्यते ।

गोहाटीनगरात् सार्धचतुःक्रोशकेषु रमणीये नीलशैले अवस्थितस्य कामाक्षामन्दिरस्य दर्शनम् अधुना सर्वसुलभम् । प्रतिदिनं बहूनि सर्वयानानि नगरात् पर्वतस्य पाददेशपर्यन्तं गच्छन्ति । ततः लघु-यानानि यात्रिणः मन्दिरस्य द्वारदेशपर्यन्तं नयन्ति ।

मन्दिरमध्ये गुहा वर्तते । गुहामध्ये देव्याः प्रतीकभूतः शिलाखण्डः विद्यते । तत्र देव्याः प्रतिमा नास्ति । कोऽपि निर्दिष्टः पूजाविधिः तत्र न अनुस्रियते । दर्शकः स्वपरिचितं कमपि पूजाविधिम् अनुसर्तुं शक्नोति ।

दुर्गापूजायाः मानसपूजायाश्च उत्सवावसरे अगणितजनाः मन्दिरदर्शनं कुर्वन्ति ।

गुह्यजगतः गूढनियमेषु प्रभुत्वप्राप्तये मानवस्य आस्पृहायाः प्रतीकरूपेण कामाक्षादेवी अद्यापि विराजते ।

(श्रीमनोजदास-महोदयस्य Temples of India इति पुस्तकात् आशार्यया अनूदिता इयं कथा ।)

# पत्राचारः

प्रिय महाशय !

आश्विनमासे अस्मिन् आश्रमे मया द्वौ कार्यक्रमौ आस्वादितौ । प्रथमो गान्धीजयन्ती-महोत्सवे 'जननी जन्मभूमिश्च' इति बहुभाषामयो गीतविशेषः । अत्र भागं वोढुम् आनन्दितुञ्च मेघराजः शीकरैः शीतलयन् आगत इति मञ्जुता कार्यक्रमस्य वर्धिता । शान्ते प्रचण्डभानोर्व्यापारे, वायौ मन्दं मन्दं वाति, सुमधुरो नादतरङ्गः सहृदयानां कर्णकुहराणि प्रविशन् अमन्दम् आनन्दम् अजनयत् । प्रणवध्वनिना समारम्भः, सामूहिकं संस्कृतगानम्, ततः प्रादेशिकभाषापद्यम्, पुनः सामूहिकगीतम् इत्यादि घण्टां यावत् सभ्यांश्चित्र-स्थितान् इव अकरोत् । संस्कृतगीतं सर्वे गायन्ति, प्रादेशिकपद्यं तु केचनेति विशेषो वस्तुतो भारतस्य

स्थितिं दर्शयति स्म । संस्कृतमेव अद्वितीया राष्ट्रभाषा, अन्यास्तु प्रादेशिकभाषा इति सत्यं को वा हृदयेन निराकुर्यात् ? गद्यसंमिश्रगानमिदं श्रावं श्रावम् आत्मानं व्यस्मरम्, पुनर्ध्यायं ध्यायं स्वात्मनो धन्यताम् अन्वभवम् ।

द्वितीयः, गतभार्गववासरे संस्कृतनाटककार्यक्रमः । कथा महाभारतस्य अश्वमेधसम्बन्धिनी । श्रीकृष्णमायया कर्णपुत्रस्य वृषकेतोः शत्रुकन्यया विवाहः, हंसध्वजस्य च ब्राह्मणकन्यया विवाहः, देशान्निष्कासनं प्रवीरस्य च शापमुक्तिः गन्धर्वलोकगमनञ्चेति वृत्तान्ताः सहृदयहृदयङ्गमा आसन् । सभास्ताराः संस्कृतसम्भाषणं प्रतिपदं जानन्ति स्मेति प्रतिक्रियया साधुवादेन च सुस्पष्टम् आसीत् । "किमिदं नाटके नाटकम्", "मायायाम् अन्या माया" इत्यादि लघु हास्यं सभायां विनोदवीचिं जनयति स्म । अभिनेतॄणां वचांसि स्फुटानि सहजानि चासन् । उत्तरभारतभाषाप्रभावः तत्र तत्र व्यज्यते स्म, विसर्गो नोच्चार्यते स्म इत्यन्यो विषयः ।

नाटकेऽस्मिन् श्रीकृष्णो मे चित्तरङ्गे सन्तोषतरङ्गं प्राकाशयत् । किन्तु स गौरवर्णेन बलराम इव प्रतीयते स्म । तस्योत्तरीयं काषायाम्बरम् आसीत् यत्पीताम्बरमित्यस्माकं रूढिः । राजकन्या श्रीकृष्णप्रतिमां पूजयति, तत्र श्रीकृष्णः स्वयमेव आगच्छति । तदा द्वयोर्व्यत्यासः स्फुटः संवृत्तः— एको मेघश्यामः, अन्यो रक्तगौरः ! एकस्मिन् रङ्गमञ्चे विना कारणं व्यत्यासोऽयमनपेक्षित इति प्रतिभाति । लघुबालिकानां नृत्यम्, गीतायाः सान्दर्भिकम् उदाहरणम् इत्यादिकं मञ्जुलमिति आश्रमबालकबालिकानां प्रयासमभिनन्दामि ।

१४. १०. ९० —सूर्यनारायणनागेन्द्रभट्टः

मित्रवर ! नमस्ते ।

प्राप्तं भवतां पत्रम् । भवद्भिः ईप्सितस्य 'संस्कृतं तमिळ् च' इत्यधिकृत्य द्वादशभागगतस्य कोशस्य प्रतिलिपिं कर्तुं तावानर्थो व्ययितव्यो भवति यावता दश वार्षिकाङ्काः क्रेतुं शक्यन्ते । अतः द्वादशमङ्कम् अद्य प्रेषये, विनैव मूल्यम् । यदि मदीयः श्रमः कस्यापि संस्कृतसेवारतस्य उपकृतये भवति तर्हि लब्धमेव प्रतिफलम् । भवतां संस्कृतसेवा संपूर्णं फलं दास्यति अचिरादेवेति प्रतीक्षे । यथावसरं सेवाविषयकं संपूर्णं परिचयं मह्यं दत्त ।

संस्कृत - साहित्य - परिषत् 'संस्कृतश्रीः'पत्रिकां प्रकाशयतः संस्कृतविद्याकेन्द्रात् भिन्ना संस्था । परिषदि उपाध्यक्षः, विद्याकेन्द्रे पत्रिकाप्रकाशकः इति उभयत्र मुख्यं वहामि भारम् ।

भवतां सौहार्दाकाङ्क्षी

तिरुचिरापल्ली राधाकृष्णशास्त्री

सत्यनिष्ठां विना किमपि कर्तुं न शक्यते । सम्पूर्णसत्यनिष्ठया सर्वं सम्भवम् ।

—श्रीमाता

# केनोपनिषद्

## प्रथमः खण्डः

केनेषितं पतति प्रेषितं मनः ।
केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति ।
चक्षुः श्रोत्रं क उ देवो युनक्ति ॥१॥

(केन प्रेषितं मनः) केन प्रहितं मनः (इषितं पतति) शरवत् स्वलक्ष्ये पतति । (केन) (युक्तः) नियुक्तः (प्रथमः प्राणः) (प्रैति) स्वमार्गेषु अग्रेसरो भवति ? (केन) (इषिताम्) प्रेरिताम् (इमां वाचं वदन्ति) इमां वाणी मनुष्या वदन्ति ? (कः उ) कः खलु (देवः) (चक्षुः श्रोत्रं युनक्ति) चक्षुः श्रोत्रं च स्वस्वकार्येषु नियोजयति ?

केन प्रहितं मनः शरवत् स्वलक्ष्ये पतति ? केन नियुक्तः प्रथमः प्राणः स्वमार्गेषु अग्रेसरो भवति ? केन प्रेरिताम् इमां वाणीं मनुष्या वदन्ति ? कः खलु देवः चक्षुः श्रोत्रं च स्वस्वकार्येषु नियोजयति ?

श्रोत्रस्य श्रोत्रं मनसो मनो यत् ।
वाचो ह वाचं स उ प्राणस्य प्राणः ।
चक्षुषश्चक्षुरतिमुच्य धीराः ।
प्रेत्यास्माल्लोकादमृता भवन्ति ॥२॥

(यत् श्रोत्रस्य श्रोत्रम्) यत् श्रवणस्य मूले स्थितं श्रवणम्, (मनसः मनः), (वाचः ह वाचम्) वाण्याः कारणभूता वाणी, (सः उ प्राणस्य प्राणः) स एव प्राणस्य प्राणोऽस्ति, (चक्षुषः चक्षुः) दृष्टेः मूलभूता दृष्टिः वर्तते । (धीराः) ज्ञानिजनाः (अतिमुच्य) पारं गत्वा मुक्तिं प्राप्नुवन्ति, (अस्मात् लोकात्) (प्रेत्य) प्रयाणं कृत्वा (अमृताः भवन्ति) अमराः सञ्जायन्ते ।

यत् श्रवणस्य मूले स्थितं श्रवणम्, मनसः मनः, वाण्याः कारणभूता वाणी च वर्तते, स एव प्राणस्य प्राणोऽस्ति दृष्टेः मूलभूता दृष्टिश्च । ज्ञानिजनाः पारं गत्वा मुक्तिं प्राप्नुवन्ति, अस्मात् लोकात् प्रयाणं कृत्वा अमराः सञ्जायन्ते ।

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो
न विद्मो न विजानीमो यथैतदनुशिष्या-
दन्यदेव तद्विदितादथो अविदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥३॥

(तत्र चक्षुः) (न गच्छति) न प्राप्नोति, (न वाक् गच्छति न मनः) न तत्र वाणी प्राप्नोति न मनः । (न विद्मः) न वयं जानीमः, (न विजानीमः) न विचारयितुं शक्नुमः यत् (यथा एतद् अनुशिष्यात्) तस्य ब्रह्मणः बोधः कथं कारणीयः; यतो हि (तद् विदितात् अन्यत् एव) तद् ज्ञाताद् अन्यद् वर्तते (अथो) अपि च (अविदितात् अधि) अज्ञातादपि परतः ऊर्ध्वम् आस्ते । (इति पूर्वेषां शुश्रुम) इदमेव अस्माभिः पूर्वपुरुषेभ्यः श्रुतं (ये नः तत् व्याचचक्षिरे) ये अस्मान् 'तद्' विशदीकृत्य बोधितवन्तः ।

तत्र चक्षुः न प्राप्नोति, न तत्र वाणी प्राप्नोति, न मनः । न वयं जानीमः, न विचारयितुं शक्नुमः यत् तस्य ब्रह्मणः बोधः कथं कारणीयः; यतो हि तद् ज्ञाताद् अन्यद् वर्तते, अपि च अज्ञातादपि परतः ऊर्ध्वम् आस्ते । इदमेव अस्माभिः पूर्वपुरुषेभ्यः श्रुतं ये अस्मान् तद् विशदीकृत्य बोधितवन्तः ।

यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥४॥

(यत् वाचा अनभ्युदितम्) यत् वाण्या अव्यक्तमेव तिष्ठति, (येन वाक् अभ्युद्यते) येन वाणी व्यक्ता भवति, (तत् एव त्वं ब्रह्म) (विद्धि) जानीहि, (न इदं यत् इदम् उपासते) न एतद् यस्य उपासनां मनुष्या अत्र कुर्वन्ति ।

यद् वाण्या अव्यक्तमेव तिष्ठति, येन वाणी व्यक्ता भवति, तद् एव त्वं ब्रह्म जानीहि, न एतद् यस्य उपासनां मनुष्या अत्र कुर्वन्ति ।

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेद यदिदमुपासते ॥५॥

(यत् मनसा न मनुते) यत् मनसा न चिन्तयति[1], (येन मनः मतम् आहुः) येन मनः चिन्तयति इति कथयन्ति, (तत् एव त्वं ब्रह्म) (विद्धि) जानीहि, (न इदं यत् इदम् उपासते) न एतद् यस्य उपासनां मनुष्या अत्र कुर्वन्ति ।

यद् मनसा न चिन्तयति, येन मनः चिन्तयति इति ज्ञानिनः कथयन्ति, तद् एव त्वं ब्रह्म जानीहि, न एतद् यस्य उपासनां मनुष्या अत्र कुर्वन्ति ।

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥६॥

(यत् चक्षुषा न पश्यति) यत् नेत्रेण न पश्यति[2], (येन चक्षूंषि पश्यति) येन मनुष्यः नेत्रस्य विषयान् पश्यति, (तत् एव त्वं ब्रह्म) (विद्धि) जानीहि, (न इदं यत् इदम् उपासते) न एतद् यस्य उपासना मनुष्या अत्र कुर्वन्ति ।

यद् नेत्रेण न पश्यति, येन मनुष्याः नेत्रस्य विषयान् पश्यति, तद् एव त्वं ब्रह्म जानीहि, न एतद् यस्य उपासनां मनुष्या अत्र कुर्वन्ति ।

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥७॥

(यत् श्रोत्रेण न शृणोति) यत् कर्णेन न आकर्णयति[3], (येन इद श्रोत्रं श्रुतम्) येन श्रोत्रस्य विषयः आकर्ण्यते, (तत् एव त्वं ब्रह्म) (विद्धि) जानीहि, (न इदं यत् इदम् उपासते) न एतद् यस्य उपासनां मनुष्या अत्र कुर्वन्ति ।

यत् कर्णेन न आकर्णयति, येन श्रोत्रस्य विषयः आकर्ण्यते, तद् एव त्वं ब्रह्म जानीहि, न एतद् यस्य उपासनां मनुष्या अत्र कुर्वन्ति ।

यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥

(यत् प्राणेन) (न प्राणिति) न श्वसिति[4], (येन प्राणः प्रणीयते) येन प्राणः स्वमार्गेषु अग्रेसरो भवति, (तत् एव त्वं ब्रह्म) (विद्धि) जानीहि, (न इदं यत् इदम् उपासते) न एतद् यस्य उपासना मनुष्या अत्र कुर्वन्ति ।

यत् प्राणेन न श्वसिति, येन प्राणः स्वमार्गेषु अग्रेसरो भवति, तद् एव त्वं ब्रह्म जानीहि, न एतद् यस्य उपासनां मनुष्या अत्र कुर्वन्ति । —जगन्नाथः

1. अथवा, "यत् मनुष्यः मनसा न चिन्तयति ।"
2. अथवा, "यत् मनुष्य. नेत्रेण न पश्यति ।"
3. अथवा, "यत् मनुष्यः श्रोत्रेण न शृणोति ।"
4. अथवा, "यत् मनुष्यः प्राणेन प्राणस्य क्रियया न गृह्णाति ।"

# वेदसूक्तयः

**आ नो भद्राः क्रतवो यन्तु विश्वतः ।**
ऋ० १.८९.१

(भद्राः) शुभाः (क्रतवः) सङ्कल्पाः विचाराश्च (नः) अस्मान् प्रति (विश्वतः) सर्वतः (आ यन्तु) आयान्तु, आगच्छन्तु । वयं सर्वेषां शुभ-सङ्कल्पानां शुभविचाराणां च धारकाः भवेम ।

**यदन्तरं तद् बाह्यं यद् बाह्यं तदन्तरम् ।**
अथर्व० २.३०.४

(यद् अन्तरम्) यत् तव अन्तरे अस्ति (तद् बाह्यम्) तदेव बहिः, बाह्यतः भवेत्, (यद् बाह्यं तद् अन्तरम्) यत् त्वद् बहिः, बाह्यतः अस्ति तत् तव अन्तरे अपि भवेत् । तव बाह्यान्तरयोः साम्यं स्यात् ।

**न ऋते श्रान्तस्य सख्याय देवाः ।**
ऋ० ४.३३.११

(श्रान्तस्य ऋते) यः स्वयं श्रमं न करोति तस्य (देवाः सख्याय न) देवाः सखायः न भवन्ति । देवाः अपरिश्रमिणः अलसस्य वा जनस्य साहाय्यं न कुर्वन्ति ।

**कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः ।**
अथर्व० ७.५०.८

(मे दक्षिणे हस्ते कृतम्) मम दक्षिणे हस्ते कर्म, पुरुषार्थः अस्ति, (मे सव्ये) मम वामहस्ते (जयः आहितः) विजयः स्थापितः अस्ति । मम दक्षिणहस्ते पुरुषार्थः, उद्योगः वर्तते वामहस्ते च विजयः ।

**उच्च तिष्ठ महते सौभगाय ।** यजु० २७.२

(महते) महनीयाय, उच्चाय (सौभगाय) ऐश्वर्याय (उत् तिष्ठ च) उत्थितः, बद्धपरिकरः भव ऊर्ध्वचेतनायां च विराज । हे मानव ! सुमहत् महनीयं च ऐश्वर्यं प्राप्तुम् उत्तिष्ठ साधनां च कुरु ।

**अश्मा भवतु नस्तनूः ।** ऋ० ६.७५.१२

(नः तनूः) अस्माकं शरीरम् (अश्मा भवतु) प्रस्तरवत्, वज्रवद् दृढं भवतु ।

**अदितिः शर्म यच्छतु ।** ऋ० ६.७५.१२

(अदितिः) पराशक्तिः विश्वजननी अस्मभ्यं (शर्म यच्छतु) सुखम्, शान्तिं शरणं च ददातु ।

---

# मनोमन्त्रमणिमाला

(विगताङ्कात् अनुवृत्तम्)

[विगत-ऑगस्ट्-मासाङ्के मनोमन्त्रमणिमालायां सप्तदशश्लोकात् परं केचित् श्लोकाः प्रमादात् त्यक्ताः अभवन् । ते अत्र प्रकाश्यन्ते । अष्टादश श्लोकात् त्रयोविंशपर्यन्ताः श्लोकाः यथास्थानं पुनः प्रकाशिताः । –सं०]

किं न बोधसि पृष्ठे ते पुरुषोऽस्ति मनोमयः ।
तन्मूले प्रत्यगात्मा च चैत्यनाम्नापि यः स्मृतः ॥१८॥

किं न बोधसि ? ते (तव) पृष्ठे मनोमयः पुरुषः अस्ति, तन्मूले (तस्य मूले, तस्य पृष्ठतः)

च प्रत्यगात्मा यः चैत्यनाम्ना अपि स्मृतः ।

चेतनं तच्चितैव त्वं कुतो गर्वसि मूढ रे ।
तस्यान्तरे च देवोऽसावन्तर्यामी विराजति ॥१९॥

रे मूढ ! त्वं कुतः गर्वसि ? [त्वम्] तच्चिता (तस्य चेतनया) एव चेतनम् असि । तस्य अन्तरे च असौ अन्तर्यामी देव. विराजति ।

चितो बुद्धौ प्रतिक्षेपेऽहन्ताऽस्या अभिजायते ।
चेतनं मन्यते सा स्वं चित्तमन्वेति तां मनः ॥२०॥

बुद्धौ चितः (चेतनायाः) प्रतिक्षेपे (प्रतिबिम्बे पतिते सति) अस्याः [बुद्धेः] अहन्ता (अहम्भावः) अभिजायते (उत्पद्यते) । सा [बुद्धिः] स्वम् (आत्मानम्) चेतनं मन्यते । चित्तं ताम् अन्वेति (अनुगच्छति) मनः च ।

स्वचैतन्याभिमानोऽयं त्रयाणां भ्रान्तिमूलकः ।
चिन्मयः पुरुषोऽव्यक्तं सक्रियं जडमुच्यते ॥२१॥

त्रयाणां (मनोबुद्धिचित्तानाम्) अयं स्व-चैतन्याभिमानः भ्रान्तिमूलकः । पुरुषः (आत्मा) [एव] चिन्मयः । अव्यक्तं [प्रधानम् अव्यक्ता प्रकृतिः वा] सक्रियं [किन्तु] जडम् उच्यते ।

विषयेन्द्रियसम्पर्को न साध्यस्त्वां विनाऽङ्ग हे ।
इन्द्रियप्राप्तबोध त्वं समर्पय चिदात्मने ॥२२॥

हे अङ्ग ! (हे प्रियमनः !) विषयेन्द्रियसम्पर्कः त्वां विना न साध्यः । त्वम् इन्द्रियप्राप्तबोधं चिदात्मने समर्पय ।

ऐन्द्रियसुखसम्भोगस्त्वद्व्यापारो न जातुचित् ।
भुजिस्तावच्चितेर्धर्मो जडं त्वं जड विद्धि रे ॥२३॥

ऐन्द्रियसुखसम्भोगः न जातुचित् (कदापि) त्वद्व्यापारः । भुजिः (भोगः) तावत् चितेः (चेतनायाः) धर्मः । रे जड ! त्वं [तु] जडम् [इति] विद्धि (जानीहि)।

सीमिते परिधौ बद्धं तव जीवनमाकुलम् ।
तस्मात् त्वं चञ्चलं स्थैर्यं शमं चापि न विन्दसि ॥२४॥

सीमिते परिधौ बद्धं तव जीवनम् आकुलम् । तस्मात् त्वं चञ्चलम् [असि], स्थैर्यम् (स्थिरताम्) अपि च शमं (शान्तिम्) न विन्दसि (प्राप्नोषि)।

नात्मज्ञानाय सम्भाव्यशक्तिलाभाय कल्पसे ।
दूरमास्तां कथा ज्ञानज्योतिरानन्दसम्पदाम् ॥२५॥

[त्वम्] आत्मज्ञानाय सम्भाव्यशक्तिलाभाय [च] न कल्पसे (समर्थं योग्यं वा न असि) । ज्ञान-ज्योति.-आनन्दसम्पदां कथा दूरम् आस्ताम् ।

निर्मूल्य त्वमहङ्कारं सर्वनाशकरं जय ।
कामक्रोधौ च लोभं च मदं मोहं च मत्सरम् ॥२६॥

त्व सर्वनाशकरम् अहङ्कारं निर्मूल्य कामक्रोधौ च लोभं च मदम्, मोहं मत्सरं च जय ।

भूत्वैव त्वमहम्मुक्तं विजित्यापि च षड्रिपून् ।
अचाञ्चल्यं च नैश्चल्यं स्थिरां शान्तिमवाप्स्यसि ।२७।

त्वम् अहम्मुक्तं भूत्वा अपि च षड्रिपून् विजित्य एव अचाञ्चल्यम्, नैश्चल्यं स्थिरां शान्तिं च अवाप्स्यसि (प्राप्स्यसि) ।

नैव शान्ता तवाशा चेद् यथेष्टं भ्राम्य* भूतले ।
त्वामेवानुसरिष्यामि न विहास्यामि कुत्रचित् ॥२८॥

तव आशा (आकाङ्क्षा) नैव शान्ता चेत् [तर्हि] भूतले यथेष्टं भ्राम्य (भ्रम) । —जगन्नाथः

*भ्रमु अनवस्थाने (दिवा. प. से.) । अत्यधिकम् अस्थिरत्वं द्योतयितुम् अत्र दिवादिगणीयः धातुः प्रयुक्तः, न तु भ्रमु चलने इति भौवादिकः ।

We are at one of these "Hours of God", when the old bases get shaken, and there is a great confusion, but it is a wonderful opportunity for those who want to leap forward, the possibility of progress is exceptional.

—The Mother

Vol VII No. 1 LOKASAMSKRITAM Regd. No 45451/85

There must be a group forming a strong body of cohesive will with the Spiritual Knowledge to save India and the world. It is India that can bring Truth in the world. By manifestation of Divine Will and Power alone India can preach her message to the world and not by imitating the materialism of the West. By following the Divine Will India shall shine at the top of the spiritual mountain and show the way of Truth and organise World Unity.

—The Mother

ॐ तत्सवितुर्वरं रूपं ज्योतिः परस्य धीमहि ।
यन्नः सत्येन दीपयेत् ॥

– श्रीअरविन्दः

14. 8. 68

We shall work for a better tomorrow

Blessings

शुभतर-श्वस्तन-दिनाय वयं कार्यं करिष्यामः ।
ममाशिषः
– श्रीमाता

AUROFOOD

अरोफुड, अरोविल, पाण्डिचेरी – ६०५ १०१
दूरभाषः – २३३८३, तन्त्रीसन्देश – अरोफुड, पाण्डिचेरी ।

सप्तमवर्षम्, द्वितीयाङ्कः                                                            १९९१, मई

# लोकसंस्कृतम्

(त्रैमासिकपत्रिका)

दिव्या सस्कृतभारती सुमहिता स्याद् राष्ट्रभाषापदे
वाग् मातुः सफलीभवेद् द्रुतमियं भव्ये भविष्येऽन्तिके ।
तेनाविष्कृतमत्र संस्कृतगिरो रूप सुबोध बुधा
लोके राजतु लोकसंस्कृतमिद त्रैमासिक शाश्वतम् ।।

संस्कृतकार्यालयः, श्रीअरविन्दाश्रमः, पुदुच्चेरी-605 002

# विषयसूची



---

**प्रकाशकः**—हरिकान्त सी. पटेलः, प्रकाशनविभागः, श्रीअरविन्दाश्रमः, पुदुच्चेरी ।

**सम्पादकाः**—जगन्नाथो वेदालङ्कारः, उषा देसाई, नरेन्द्रः ।

वार्षिक-शुल्कम् रू. १५.००, आजीवन-शुल्कम् (विंशतिवर्षपर्यन्तम्) रू. २५० ००।

**प्रकाशनकालः**—फर्वरी २१, मई १५, अगस्त १५, नवाम्बर २४ ।

**मुद्रकः**—अमियरञ्जन-गाङ्गुलिः, श्रीअरविन्दाश्रम-मुद्रणालयः, पुदुच्चेरी ।

The sanskrit ought

to be the national language

of India

Blessings

संस्कृतं भारतस्य राष्ट्रभाषा भवेत् ।

मम आशिषः

१९. ४. १९७१ — श्रीमाता

# श्रीमातुः सन्देशः

India is the country where the psychic law can and must rule and the time has come for that here. Besides, it is the only possible salvation for this country whose consciousness has unfortunately been distorted by the influence and domination of a foreign nation, but which, in spite of everything, possesses a unique spiritual heritage.

Blessings.

Vol. 13, P. 378 — 2 August 1970

भारतं नाम इदं राष्ट्रं यत्र अन्तरात्मनः धर्म. शासनं कर्तुम् अर्हति एतत् च तेन कर्तव्यम् एव । तदर्थं कालः सम्प्राप्तः । अपि च, एकस्य पाश्चात्यदेशस्य प्रभावात् शासनात् च दुर्भाग्यवशतः विकृतचैतन्यस्य अस्य देशस्य अयमेव एकमात्रः सम्भाव्य उद्धारोपायः । सत्स्वपि एषु व्यतिकरेषु अयं देशः अद्वितीयाम् अध्यात्मपरम्परां सन्धारयति ।

आशीर्वादाः ।

*

India will take her true place in the world only when she will become integrally the messenger of the Divine Life.

Vol. 13, P. 380 — 24 April 1972

भारतवर्षः पृथिव्यां तदैव स्वकीयं यथार्थस्थानं प्राप्स्यति यदा स. समग्रतया दिव्यजीवनस्य सन्देशहरः भविष्यति ।

# बाललेखाः

### सुशीलः

आसीत् सुशीलः नाम कश्चित् बालकः । किन्तु नामानुरूपः गुणः तस्मिन् न आसीत् । सः बुद्धिमान् किन्तु अतीव चपलः । तूष्णीम् उपविश्य कार्यं कर्तु सः सर्वथा असमर्थः । परिणामतः वर्षान्तपरीक्षायां सः अत्यल्पान् अङ्कान् प्राप्नोत् — आङ्गल्याम् १ अङ्कः, संस्कृते १ अङ्क, गणिते शून्यम् । अध्यापकः तम् अपृच्छत् — "सुशील, कथं त्वया गणिते शून्यं प्राप्तम् ? एकः अङ्कः तु प्राप्तः स्यात् ।" निर्लज्जः सुशीलः अवदत्, "ये साहित्ये निपुणाः ते प्रायशः गणिते दुर्बलाः भवन्ति !"

### झञ्झावातः

अकस्मात् मध्याह्ने सूर्यस्य प्रकाशः अल्पीभूतः । मेघाः आकाशम् आच्छादयन्ति । पृथिवी घनगर्जनेन कम्पते । त्रिलोकं त्रस्तम् इव । वृष्टिः आरब्धा । शीतवायुः सवेगं वहति । वृक्षाः धराशायिनः । विद्युत् चकास्ति । अशान्तः समुद्रः कोपेन गर्जति । वायुना विद्युत्ताराः छिन्नाः । रात्रिः आगता । कस्यापि गृहे आलोकः नास्ति । सर्वत्र अन्धकारः । प्रकृतेः इदं प्रचण्डं रूपं पश्यन् अहं सुखं न अनुभवामि ।

### दुःस्वप्नः

सागरे अस्माकं पोतः नष्टः । सर्वे मृताः । केवलम् अहं जीविता । अहं तरणं जानामि । किन्तु मम क्लान्तानि अङ्गानि अधिकं परिश्रमं कर्तुं न इच्छन्ति । किम् अत्रैव मम अन्तः भविष्यति ? नहि, नहि, अहं तरिष्यामि, अहं जीविष्यामि । तरणं कुर्वती अहं मूर्च्छिता ।

यदा संज्ञाम् अलभे तदा सागरस्य गभीरे तले आत्मानम् अपश्यम् । अहं कस्मिन् अपि रुद्धकक्षे अस्मि इति अन्वभवम् । तत्र कोऽपि मम कण्ठं बलेन पीडयति इव । अहं चीत्कारं करोमि । तस्मिन् गभीरजले कोऽपि मम चीत्कारं न शृणोति । मम हृत्स्पन्दनम् अधिकाधिकं वर्धते ।

हठात् अहम् अपतम् । न जाने कुतः । चीत्कारं कुर्वती अहम् अवदम् — मातः, रक्ष माम्, रक्ष । परम् अपश्यम् — अहं खट्वायाः भूमौ पतिता ।

### अस्माकं जीवनम्

अस्माकं जीवनं कोऽपि शून्यस्वप्नः नास्ति । जीवनं सत्यम् । अतीतं गतम् । भविष्यम् अज्ञातम् । वर्तमानम् अस्माकम् आधारः । वर्तमाने कृतं कर्म भविष्यस्य पाथेयम् । लक्ष्यं विना जीवनं निरानन्दम् । जीवनं कियत् लघु ! प्रत्येकमुहूर्तम् अस्मान् मृत्योः निकटतरं करोति । तस्मात् प्रतिपलं प्रगत्याः आकाङ्क्षा कर्तव्या । अस्माकम् उद्योगस्य फलप्राप्तये धैर्येण प्रयोजनम् । जीवनं रणक्षेत्रम् । वयं योद्धारः । यदि युद्धे एकवार पराजिताः भवेम, तथापि न भेतव्यम् । युद्धं करणीयम् । अन्ते अस्माकं जयः सुनिश्चितः ।

---

भगवतः विश्वासभाजनं भव । तदा स्थिरशान्तेः उपभोगं करिष्यसि । —श्रीमाता

## चतुरबालकः

आसीत् कोऽपि राजा । तस्य एकः विशालः हस्ती आसीत् । एकदा राजा घोषणाम् अकरोत् —"यदि कोऽपि मम हस्तिनः एकं पादम् उत्थापयितु शक्नोति तर्हि सः सहस्रं स्वर्णमुद्राः प्राप्स्यति ।" बहवः मल्लाः आगताः । किन्तु सर्वे असफलाः अभवन् ।

तत्र कोऽपि बालकः आसीत् । सः चेष्टितुं गतः । सः हस्तिनः पादं सूच्या अविध्यत् । हस्ती पादम् उदस्थापयत् । बालकः स्वर्णमुद्राः प्राप्नोत् ।

दिनानि गतानि । पुनः राजा घोषणाम् अकरोत् — "यदि कोऽपि मम हस्तिनः मस्तकेन 'आम्, नहि' इति इङ्गिते कारयितु शक्नोति तर्हि सः अर्धराज्यं प्राप्स्यति ।"

पुनः सः बालकः आगतः । सः हस्तिनम् अपृच्छत् — त्वं मां जानासि ? हस्ती स्वशुण्ड चालयन् 'आम्' इति असूचयत् । तदा बालकः अवदत्, "अहं तव पादम् उत्थापयेयम् ?" हस्ती मस्तकं चालयन् "नहि" इति असूचयत् ।

राजा बालकस्य बुद्धया अतीव प्रसन्नः तस्मै अर्धराज्यम् अददात् । किन्तु पूर्वप्राप्ताभिः सहस्र-स्वर्णमुद्राभिः सन्तुष्टः बालकः तत् न स्व्यकरोत् ।

— हेमलता

---

## अम्लानि द्राक्षाफलानि

अपि 'अम्लानि द्राक्षाफलानि' इति कथा सत्या ? नहि । सत्यां कथाम् अहं कथयामि ।

श्रृगालः लम्फित्वा कानिचित् द्राक्षाफलानि प्राप्नोत् । तानि खादित्वा अतीव प्रसन्नः सः अवदत् "अहो मधुराणि खलु एतानि द्राक्षाफलानि !"

अत्रान्तरे तत्र अन्ये पशवः आगताः । ते अपि द्राक्षाफलानि खादितुम् ऐच्छन् । ते श्रृगालम् अकथयन्, "कृपया अस्मभ्यं कानिचित् देहि ।"

श्रृगालः अतीव धूर्तः । सः अचिन्तयत्, "यदि अहं सर्वेभ्यः द्राक्षाफलानि दद्यां तर्हि मदर्थम् अत्यल्पानि स्थास्यन्ति । साधु, अहं नाटकं करोमि ।" सः द्राक्षाफलानि धर्तुम् अलम्फत् । त्रिचतुरवारं विफलप्रयासं कृत्वा स सर्वान् अकथयत्, "द्राक्षाफलानि अम्लानि । अहं तानि न इच्छामि । अलं वृथा श्रमेण । गन्तव्यं स्वगृहम् ।"

एतत् श्रुत्वा सर्वे अकथयन्, "यतो हि एषः फलानि चेतुं न शक्नोति तस्मात् कथयति 'अम्लानि द्राक्षाफलानि' इति ।" सर्वे तम् उपहस्य स्व-स्व-गृहं गताः ।

गते तेषु श्रृगालः पुनः तत्र गत्वा, उच्चैः लम्फित्वा द्राक्षाफलानि अवाचिनोत् सुखेन च अखादत् ।

— सोनालिः

# स्पर्शमणिः

अनन्तकुमारः कश्चित् दरिद्रः व्यापारी । देशे देशे सः भ्रमति धनम् अर्जयितुम् । यदा बहुभ्यः दिनेभ्यः परं किञ्चिदपि धनं न प्राप्नोत् तदा निराशया कस्यचित् सन्न्यासिनः चरणयोः पतित्वा सः दुःखेन अवदत्, "हे गुरुदेव ! मह्यं धनं देहि । अहं धनम् इच्छामि ।"

सन्न्यासी अपृच्छत्, "किमर्थं रे पुत्र ?" "यतो हि अहं दरिद्रः स्थातुं न इच्छामि । दारिद्र्यं मह्यं केवलं दुःखमेव ददाति ।" महाज्ञानी सन्न्यासी अवदत्, "धनं दुर्भाग्यम् आनयति रे पुत्र ! धनस्य अर्थे उन्मत्तः मा भव । सत्यस्य मार्गम् अनुसर ।"

अनन्तकुमारः पुनः अवदत्, "हे मुने ! केवलं धनेन अहं सन्तुष्टः भविष्यामि, नान्यथा ।" शान्त-सौम्य-सन्न्यासी अकथयत्, "तथास्तु ।"

मुहूर्तेन एकः श्वेत-स्निग्धः उपलः शून्यात् अनन्तकुमारस्य सम्मुखे अपतत् । "गृहाण एतं स्पर्शमणिम् । यदि त्वं लोहस्य वस्तु अनेन स्पृशेः, तत् स्वर्णं भविष्यति । किन्तु अहं पुनर्वदामि — लोभः मनुष्यस्य जीवनं नाशयति ।"

अनन्तकुमारः आनन्देन मत्तः अभवत् । शीघ्रमेव सः स्पर्शमणिं गृहीत्वा, सन्न्यासिनं प्रणम्य, धावन् गृहं प्रत्यागच्छत् । गृहम् आगत्य सः प्रसेवात् स्पर्शमणिं बहिष्कर्तुम् उद्यतः । हा हन्त ! प्रसेवे स्पर्शमणिः नास्ति । प्रसेवस्य छिद्रात् सः कुत्रापि पतितः ! अनन्तकुमारस्य मुखं म्लानम् । सः शीघ्रं व्यचारयत् — स्पर्शमणिः निश्चितमेव नदीतटे पतितः ।

समयं न नाशयित्वा सः पूर्णवेगेन नदीतटं प्रति अधावत् । तत्र सः उन्मत्तः इव वालुकासु स्पर्शमणिम् अन्वैषयत् । प्रत्येकम् उपलः समानः दृश्यते । तदा एकैकशः सः तैः उपलैः लोह-कङ्कणं स्पृष्ट्वा अपश्यत् तत् स्वर्णं भवति न वा इति ।

एवं प्रतिदिनं प्रचलति प्रभातात् सायङ्काल-पर्यन्तम् । मासाः गताः । वर्षाणि अतीतानि । अनन्तकुमारः यन्त्रम् इव प्रत्येकम् उपलम् उत्थाप्य परीक्षते । सः अतीव दुर्बलः अभवत् । तस्य केशाः दीर्घाः जाताः । जनाः तम् उन्मत्तः इति अवदन् । किन्तु सः किमपि न अबोधत्, कमपि न अशृणोत् । दिवारात्रं नदीसैकते अभ्रमत् ।

अकस्मात् एकस्मिन् दिने कोऽपि लघुबालकः तं दृष्ट्वा अतिचकितः अवदत्, "वाः ! अतिशोभनः ते स्वर्णवलयः ।"

युगेभ्यः परम् अनन्तकुमारस्य निद्रा भग्ना इव । सः वलयम् अपश्यत् — सत्यमेव स्वर्ण-वलयः । "हा हन्त !" आक्रोशत् अनन्तकुमारः । "एतावन्ति वर्षाणि वृथा अभवन् ! अहं स्पर्शमणिं प्राप्यापि न प्राप्तवान् ।" सः पुनः व्यचारयत्, "एतत् तु निश्चितं यत् स्पर्शमणिः अधुनापि नदीतटे वर्तते ।"

अनन्तकुमारस्य लोभः अधुनापि न मृतः । सः विनाशस्य मार्गे पुनः अचलत् । स्पर्शमणेः अन्वेषणे पुनः सः लग्नः ।

— सोमकान्तिः

# प्रबलस्य साहसम्

एकस्मिन् देशे सर्वे जनाः अतीव प्रसन्नाः आसन् । देशे सर्वम् आसीत् । केवलं दुःखं न आसीत् ।

एकदा कोऽपि राक्षसः तं देशम् आगतः । सः सर्वान् जनान् ताडयति, पीडयति, मारयति, खादति । सर्वे जनाः भयभीताः । सर्वे देशं त्यक्त्वा पलायन्ते ।

तदा तस्य देशस्य राजा सर्वत्र घोषयति — "श्रूयताम्, श्रूयताम् । अस्माकं देशे एकः महाराक्षसः अस्ति । यः कोऽपि तं राक्षसं मारयिष्यति सः अर्धं राज्यं प्राप्स्यति ।"

बहवः जनाः राक्षसं मारयितुं चेष्टन्ते । किन्तु राक्षसः बलवान् । राक्षसः तान् ताडयति, पीडयति, मारयति, खादति ।

आसीत् एकः बालकः । नाम तस्य प्रबलः । सः चिन्तयति — "अहं राक्षसं मारयिष्यामि ।"

एकदा रात्रौ कमपि न कथयित्वा प्रबलः गृहात् पलायते । सः चलति, चलति, चलति । मार्गे एकः प्रस्तरः अस्ति । सः प्रस्तरं न पश्यति । सः प्रस्तरस्य उपरि पतति । प्रबलः प्रस्तरं वदति — "क्षम्यतां प्रस्तर !" प्रस्तरः वदति — "एवं तु कोऽपि मां न अवदत् ! कस्त्वम् ? कुत्र गच्छसि ?" तदा प्रबलः वदति — "अहं प्रबलः । राक्षसं मारयितुं गच्छामि ।" प्रस्तरः कथयति — "माम् अपि नय ।"

प्रबलः अग्रे चलति । प्रस्तरः पृष्ठतः लुठति । परं प्रबलः मार्गे एकां रज्जुं पश्यति । सः पृच्छति — "अयि रज्जो ! त्वमत्र जङ्गले किं करोषि ?" तदा रज्जुः कथयति — "अहं पूर्वं मन्दिरे आसम् । पूजकः मां जङ्गले अक्षिपत् ।" प्रबलः वदति — "अहो कष्टम् !" तदा रज्जुः तं वदति — "एवं तु कोऽपि मां न अवदत् ! कस्त्वम् ? कुत्र गच्छसि ?" प्रबलः वदति — "अहं प्रबलः । राक्षसं मारयितु गच्छामि ।" रज्जुः कथयति — "मामपि नय ।"

प्रबलः रज्जुं स्कन्धे स्थापयति, अग्रे चलति । प्रस्तरः पृष्ठतः लुठति । किञ्चित्कालात् परं प्रबलः एकां गोणीं पश्यति । सः पृच्छति — "अयि गोणि ! त्वमत्र जङ्गले किं करोषि ?" गोणी वदति — "अहं पूर्वं लोहकारस्य गृहे आसम् । सः माम् अत्र अक्षिपत् ।" प्रबलः वदति — "अहो दुःखम् !" गोणी तं वदति — "एवं तु कोऽपि मां न अवदत् ! कस्त्वम् ? कुत्र गच्छसि ?" प्रबलः वदति — "अहं प्रबलः । राक्षसं मारयितुं गच्छामि ।" गोणी वदति — "मामपि नय ।"

प्रबलः रज्जुं गोण्यां स्थापयति, गोणीं स्कन्धेन वहति, चलति । प्रस्तरः पृष्ठतः लुठति । किञ्चित्कालात् परं प्रबलः एकं खनित्रं पश्यति । सः पृच्छति — "अयि खनित्र ! त्वमत्र जङ्गले किं करोषि ?" खनित्रं वदति — "अहं पूर्वं कस्यापि कृषकस्य गृहे आसम् । सः माम् अत्र अक्षिपत् ।" प्रबलः वदति — "अहो दुःखम् !" तदा खनित्रं कथयति — "एवं तु कोऽपि मां न अवदत् ! कस्त्वम् ? कुत्र गच्छसि ?" प्रबलः वदति — "अहं प्रबलः । राक्षसं मारयितुं गच्छामि ।" खनित्रं वदति — "मामपि नय ।"

प्रबलः खनित्रं गोण्यां स्थापयति, रज्ज्वा गोणीं बध्नाति, गोणी स्कन्धे स्थापयति, चलति । प्रस्तरः

पृष्ठतः लुठति । सर्वे राक्षसस्य गृहं प्राप्नुवन्ति । गृहस्य द्वारे एकं विशालं हस्तलम् अस्ति । प्रबलः तत् बलेन ताडयति — ठक्, ठक्, ठक्, ठक् । गृहस्य अन्तरात् राक्षसः उच्चैः पृच्छति — "द्वारे कः ?" प्रबलः वदति — "अहं प्रबलः । त्वां मारयितुम् आगतः ।" तदा राक्षसः वदति — "पश्यामि तव बलम् । मम रोटिकां खाद ।" एतत् कथयित्वा सः वातायनात् एकाम् अतिकठिनाम्, शुष्कां रोटिकां क्षिपति । प्रबलः प्रस्तरं धरति, वातायनात् अन्तरे क्षिपति, वदति — "अयि राक्षस ! त्वं मम रोटिकां खाद ।"

राक्षसः प्रस्तरं खादितुं चेष्टते । राक्षसस्य दन्तः त्रुटितः । सः तं दन्तं बहिः क्षिपति, वदति — "पश्य मम दन्तम् ।" तदा प्रबलः खनित्रम् अन्तरे क्षिपति, वदति — "पश्य मम दन्तम् ।" राक्षसः क्रोधेन मस्तकात् केशम् उत्पाटयति, बहिः क्षिपति, वदति — "पश्य मम केशम् ।" तदा प्रबलः रज्जुम् अन्तरे क्षिपति, वदति — "पश्य मम केशम् ।"

अधुना राक्षसः भयभीतः । सः चिन्तयति — "प्रबलः अति बलवान्, अति विशालः, अति भयङ्करः ।" सः मन्दं मन्दं गृहस्य द्वारम् उद्घाटयति, द्वारस्य सम्मुखे लघुप्रबलं पश्यति । प्रबलं दृष्ट्वा राक्षसः उच्चैः हसति — हा हा हा हा । "त्वं मां मारयितुम् आगतः ? हा हा हा हा । पश्यामि तव बलम् । किं करिष्यसि मम ?"

प्रबलः वदति — "गोणि ! मम साहाय्यं कुरु ।" गोणी उत्पतति, राक्षसस्य मस्तके पतति, राक्षसस्य मुखम् आच्छादयति । परं प्रबलः वदति — "रज्जो ! मम साहाय्यं कुरु ।" रज्जुः उत्पतति, राक्षसस्य कण्ठं बध्नाति, श्वासं रोधयति । पुनः प्रबलः वदति — "प्रस्तर ! मम साहाय्यं कुरु ।" प्रस्तरः उत्पतति, वारंवारं राक्षसस्य मस्तके प्रहरति, ताडयति, राक्षसं पातयति । तदा प्रबलः वदति — "खनित्र ! मम साहाय्यं कुरु ।" खनित्रम् उत्पतति, राक्षसस्य मस्तकं छेदयति ।

राक्षसः मृतः । प्रबलः राक्षसस्य मस्तकं गोण्यां स्थापयति, गोणीं रज्ज्वा बध्नाति । खनित्रं हस्तेन धरति । सर्वेभ्यः धन्यवादान् कथयति । अग्रे चलति । प्रस्तरः पृष्ठतः लुठति ।

प्रबलः राजगृहं प्राप्नोति । राक्षसस्य मस्तकं महाराज दर्शयति । राजा अतीव प्रसन्नः भवति । सः प्रबलाय अर्धं राज्यं ददाति । तत्र प्रबलः राजा भवति । सः पुनः प्रस्तरम्, रज्जुम्, खनित्रम्, गोणी धन्यवादान् कथयति । सर्वे प्रबलस्य गृहे सुखेन वसन्ति ।

(एषा कथा आश्रमविद्यालयस्य ४-५वर्षीय-शिशून् मया श्राविता आसीत् । — राधिकारञ्जनः ।)

गोणी — sack. खनित्रम् — pick-axe. हस्तलम् — handle.

---

श्रीमाता तैः सर्वैः सह वर्तते ये दल-राजनीतिभ्याम् ऊर्ध्वं वर्तमानाः दिव्यजीवन-यापनार्थं सन्निष्ठया आस्पृहयन्ति ।

— श्रीमाता

# सरस्वतीस्तोत्राणि

कज्जलपूरितलोचनभाले स्तनयुगशोभितमुक्ताहारे ।
वीणापुस्तकरञ्जितहस्ते भगवति भारति देवि नमस्ते ॥

सरस्वति महाभागे विद्ये कमललोचने ।
विश्वरूपे विशालाक्षि विद्या देहि नमोऽस्तु ते ॥

सा मे वसतु जिह्वायां वीणापुस्तकधारिणी ।
मुरारिवल्लभा देवी सर्वशुक्ला सरस्वती ॥

श्वेतपद्मासना देवी श्वेतपुष्पोपशोभिता ।
श्वेताम्बरधरा नित्या श्वेतगन्धानुलेपना ॥

श्वेताक्षी शुक्लवस्त्रा च श्वेतचन्दनचर्चिता ।
वरदा सिद्धगन्धर्वैर्ऋषिभिः स्तूयते सदा ॥

मतिदां कीर्तिदां चैव सर्वकामफलप्रदाम् ।
केशवस्य प्रियां देवीं वीणाहस्तां वरप्रदाम् ॥

मन्त्रप्रियां सदा हृद्यां कुमतिध्वंसकारिणीम् ।
स्वप्रकाशां शुभां नित्यां सुभगां प्रणमाम्यहम् ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥

शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् ।
हस्ते स्फाटिकमालिकां विदधती पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥

मरामरासुराराध्या वरदा सा हरिप्रिया ।
गतिर्मे तत्पदाम्भोजं वाग्देवीं प्रणमामि ताम् ॥

---

# आलापमाला

(१)

शिक्षिका – वत्स, अत्र आगच्छ ।

बालः – या आज्ञा । अयम् अहम् आर्ये, आज्ञापयतु ।

शिक्षिका – त्वं किं पठसि ?

बालः – अहं संस्कृतं पठामि ।

शिक्षिका – साधु । संस्कृतं पठितव्यम् । का इयम् ?

बालः – इयम् आगमनी, मम सखी ।

शिक्षिका – आगमनि, अत्र आगच्छ ।

आगमनी – इयम् अहम् । आज्ञापयतु ।

शिक्षिका – वद, त्वं किं पठसि ?

आगमनी – अहं श्लोकं पठामि ।

शिक्षिका – साधु, साधु । श्लोकः पठितव्यः । का सा तत्र ?

आगमनी – सा मदालसा ।

शिक्षिका – मदालसे, अत्र आगच्छ ।

मदालसा – इयम् अहम् आर्ये !

शिक्षिका – त्वं तत्र किं पठसि ?

मदालसा – अहम् अत्र गीतां पठामि ।

शिक्षिका – गीताम् ? अतीव साधु । गीतायाः एकं श्लोकं श्रावय ।

मदालसा – सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

शिक्षिका – अयं तु सर्वोत्तमः श्लोकः । सर्वेऽपि यूयम् इमं पठत ।

(मा शुचः — शोकं मा कुरु । शरणं व्रज — शरणं गच्छ ।)

(२)

गीता – आर्ये, मां पाठयतु ।

शिक्षिका – वत्से, किं पठितुम् इच्छसि ?

गीता – संस्कृतम् । तत् मम बहु प्रियम् ।

शिक्षिका – ममापि तत् प्रियम् । तत् अति मधुरं संगीतमयं च । अपि अन्ये केचित् संस्कृतं पठितुम् इच्छन्ति ?

अन्ये सर्वे – वयं सर्वे संस्कृतं पठिष्यामः । अस्मान् पाठयतु भवती ।

शिक्षिका – आनन्दिता अस्मि । युष्मान् सर्वान् अपि संस्कृतं पाठयिष्यामि ।

सर्वे – वयम् अपि बहु आनन्दिताः । पाठयतु एकं श्लोकम् ।

शिक्षिका – शृणुत तर्हि । सावधानं शृणुत । यथा अहं पठामि तथा युष्माभिः पठितव्यम् । अवगतम् ?

सर्वे – आम्, आम् । तथैव पठिष्यामः ।

शिक्षिका – भगवान् हृदये यस्य सत्यज्योतिश्च मानसे।
शुभाः कामाः शुभा वृत्तिः स धन्यात्मा धरातले॥

(कामाः — कामनाः । वृत्तिः — स्वभावः, अन्तर्भावः ।)

(३)

निवेदिता – कुत्र गच्छसि सखि ?

आगमनी – उद्यानं गच्छामि ।

निवेदिता – किमर्थम् ? अधुना वयं खेलामः ।

आगमनी – अन्यः समयः नास्ति । नित्यम् एव खेलामि । अद्य उद्यानं गमिष्यामि । आगन्तुम् इच्छसि त्वम् ?

निवेदिता – तत्र किम् अस्ति ?

आगमनी – एष वसन्तऋतुः । तत्र नवानि पर्णानि सन्ति । पर्णे पर्णे पुष्पं भवति । सर्वम् एव सुन्दरं तत्र ।

निवेदिता – तर्हि अहम् अपि आगमिष्यामि । पुष्पाणि मम प्रियाणि ।

आगमनी – आगच्छ, आगच्छ । तत्र सन्दीपः दृश्यते, दक्षः अपि । आह्वय तौ ।

निवेदिता – अयि सन्दीप, अयि दक्ष, आगच्छतम् । उद्यानं गमिष्यामः ।

उभौ – (धावन्तौ आगच्छतः) उद्यानम् ? उद्यानम् ?

निवेदिता – आम् आम्, उद्यानम् ।

उभौ – आवाम् अपि आगमिष्यावः । तत्र उद्याने पुष्पाणि, मधुमक्षिकाः, पतङ्गाः भवन्ति । सर्वं तत्र मनोहरम् । चलाम तावत् । (इति सर्वे गायन्तः चलन्ति ।)

चलाम तावद् रम्योद्यानम्
ऋतुराजोऽस्ति वसन्तः ।
नवपल्लवपुष्पाणि भवन्ति
सर्वे सुस्मितवन्तः ॥

पुष्पे पुष्पे तरलपतङ्गः
पुष्पसमानो नवनवरङ्गः ।

पिबन्ति मधु मधुमक्षिकमाला
भ्रमरा अपि भ्रमन्तः ॥
चलत चलत रे मुदितात्मानः
तत्र कोकिलः कलरवगानः ।
नृत्यन्तो गायन्तो मधुरं
चलत चलत विहरन्तः ॥

(४)

सत्यः—बाले, का त्वम् ?

शोभा—अहं शोभा नाम ।

सत्यः—शोभा ? शुभं नाम । सुन्दरं नाम ।

शोभा—भ्रातः, किं तव नाम ?

सत्यः—सत्यनारायणः, संक्षेपेण सत्यः । भद्रे, त्वं कुतः आगता ?

शोभा—देहलीनगरात् । बहुदूरात्, नहि ?

सत्यः—सत्यमेव बहुदूरात् ।

शोभा—देहली भव्यं नगरम् । भारतस्य राजधानी ।

सत्यः—कथय, किमर्थं त्वम् अत्र आगता ?

शोभा—वद, त्वं किमर्थम् अत्र असि ?

सत्यः—विद्याभ्यासार्थम् ।

शोभा—तर्हि अहम् अपि विद्याभ्यासार्थम् अत्र आगता ।

सत्यः—कुत्र पठिष्यसि त्वम् ?

शोभा—श्रीअरविन्दस्य विद्यालये ।

सत्यः—धन्याऽसि त्वम् । अहम् अपि तत्रैव पठामि । अयं विद्यालयः अनुपमः ।

शोभा—त्वम् अपि सुधन्यः । वयं सर्वेऽपि सुधन्याः ये अस्मिन् विद्यालये पठामः ।

उभौ—सुधन्याः स्मो वयं सर्वे श्रीमातुः प्रियबालकाः ।
पठामोऽत्र वयं प्रीत्या पुण्येऽस्मिन् पाठमन्दिरे ॥
भगवानरविन्दो नः पिता, माता महेश्वरी ।
अस्मान् पालयति प्रेम्णा सच्चिदानन्दरूपिणी ॥

(५)

कृष्णः—सन्दीप, चल खेलाव ।

सन्दीपः—नहि । न मे समयः अधुना । अहं कूटचित्रे व्यापृतः । जयदीपेन सह खेल ।

जयदीपः—कृष्ण, त्वं मया सह खेलिष्यसि ? वद, कां खेलाम् इच्छसि ?

कृष्णः—भ्रमरकेण खेलाव ।

जयदीपः—किन्तु मम सकाशे भ्रमरकः नास्ति ।

कृष्णः—तर्हि कन्दुकेन खेलाव ।

जयदीपः—साधु । आयाहि । त्वं मयि कन्दुकं क्षिप, अहं त्वयि क्षिपामि, परन्तु कन्दुकः भूमौ पतनात् पूर्वं ग्रहणीयः ।

कृष्णः—बाढम् । (इति तौ परस्परस्मिन् कन्दुकं क्षिपतः)

जयदीपः—आः, तव हस्तात् कन्दुकः भूमौ पतितः । मम एकः गुणः ।

कृष्णः—आहा, तव हस्तात् अपि कन्दुकः पतितः । ममापि एकः गुणः ।

(तस्मिन् अवसरे श्रूयते ।)

के बालाः कथां श्रोतुम् इच्छन्ति ? शीघ्रम् एव ते आगच्छन्तु कक्षाम् । कथाकारः समागतः ।

कृष्णः—सन्दीप, चल चल । श्वः खेलिष्यावः । अधुना कथा श्रोतव्या ।

जयदीपः—आम् आम् । चल, त्वरितं चल, अग्रभागे उपविशाव ।

क्रीडायां यो रसस्तस्मात् कथायां द्विगुणो रसः ।
एकः कथारसः सर्वरसान् जयति लीलया ॥
(इति धावन्तौ गच्छतः ।)

(कूटचित्रम् — picture-puzzle. बाढम् — all right. गुण — point.)

(६)

शिक्षिका – अपि श्लोक. लिखित ?

छात्राः – आम् आर्ये, लिखितः ।

शिक्षिका – साधु । शोभनाः छात्रा ।

छात्रः – अधुना किं कर्तव्यम् ?

शिक्षिका – सर्वेऽपि श्लोकं पठत । सह एव पठितव्यम् ।

छात्राः – इमे पठामः । (ते पठन्ति ।)

शिक्षिका – मन्दं मा पठत । किञ्चित् उच्चैः पठ्यताम् । (छात्रा. उच्चैः पठन्ति ।)

गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पाप तापं च दैन्यं च हरति श्रीहरेः कृपा ॥

शिक्षिका – सुन्दरं पठितम् । मधुरं पठितम् । शुद्ध पठितम् । स्पष्टं पठितम् । एकरागेण पठितम् । अति प्रसन्ना अहम् । वत्साः, सदैव इत्थं पठितव्यम् ।

छात्राः – आर्ये, श्लोकस्य कः अर्थः ? शब्दानां कः अर्थः ?

शिक्षिका – तम् अपि वदामि । (हस्तघटीं दृष्ट्वा) अद्य तु समयः जातः । आगामिवारे सर्वं पाठयिष्यामि । (घण्टानाद. श्रूयते ।)

छात्राः – घण्टा वादिता ।

शिक्षिका – गच्छाम तावत् । पुनर्दर्शनाय ।

छात्राः – पुनर्दर्शनाय । (इति सर्वे गच्छन्ति ।)

(७)

रमेश – सुदिनम्, विनय !

विनयः – सुदिनम्, रमेश !

रमेशः – कुत्र गच्छसि त्वरितम् ?

विनयः – आश्रम गच्छामि ।

रमेश – किं कार्यं तत्र ?

विनय – समाधिदर्शनाय गच्छामि ।

रमेशः – किन्तु त्वरितं किम् ? शान्तिपूर्वकं गच्छ ।

विनय – घण्टा वादिता । वर्गस्य समय. जातः ।

रमेश – बाढम् । गच्छ त्वरितम् । अहम् अपि शाला गच्छामि ।

विनयः – वर्गान्ते पश्य मा पुनः ।

रमेश. – अवश्यम् उद्याने मिलिष्याव ।

विनयः – आम्, पुनर्दर्शनाय ।

रमेशः – पुनर्दर्शनाय । (इति गानं गायन् गच्छति ।)

त्वमेव मम माताऽसि देवी भगवती स्वयम् ।
अङ्के ज्योतिर्मये तेऽह सुधा सेवे सुखी शिशुः ॥

(८)

स्वसा – भ्रात., का इयं नूतनबाला ? मधुरम् अस्याः मुखम्, प्रसन्ने नेत्रे ।

भ्राता – सा मम मित्रस्य भगिनी मञ्जुला नाम ।

स्वसा – कस्य मित्रस्य ?

भ्राता – शिरीषस्य ।

स्वसा – अहो शिरीषस्य ! सः अतीव शोभनः बालकः ।

भ्राता – अपि जानासि ?

स्वसा – किम् ?

भ्राता – मञ्जुला अत्र पठिष्यति आश्रमविद्यालये ।

स्वसा – तत् तु अतीव शोभनम् । भ्रात., आह्वय ताम् अत्र । सा मम सखी भविष्यति ।

भ्राता – अयि मञ्जुले, आगच्छ अत्र ।

मञ्जुला – अहो भ्राता सुशील ! इयम् आगच्छामि। (आगत्य) किं वदसि भ्रातः ?

भ्राता – पश्य । इय का ? जानासि ?

मञ्जुला – नहि । त्वम् एव वद ।

भ्राता – इयं मम स्वसा, स्निग्धा स्वसा ।

मञ्जुला – तव निजस्वसा । तर्हि सा ममापि स्वसा । (तां प्रति) स्वसः ! किं तव शुभनाम ?

स्वसा – माधुरी ।

मञ्जुला – अहो माधुरी ! सुमधुरं नाम । यथा तव नाम तथा गुण. ।

स्वसा – त्वम् अपि यथार्थनामा । मञ्जुला नाम । मधुरम् अस्य गुञ्जनम् । वद, कुत्र गच्छसि ?

मञ्जुला – क्रीडाक्षेत्रम् । अद्य अस्माकं दिनम् ।

स्वसा – अहम् अपि आगच्छामि ।

भ्राता – अहम् अपि । क्रीडाक्षेत्रं दूरे अस्ति । वयं त्रयोऽपि तत्र गमिष्यामः ।

उभे – साधु, साधु । मार्गे विनोद· भविष्यति । चलाम तावत् (इति ते प्रस्थिताः गुञ्जन्तः ।)

सेलामस्तत्र खेलामः क्रीडाक्षेत्रे सुविस्तृते ।
आनन्द प्राणवृद्धिश्च सर्वथैव भविष्यत· ।।

(सेलामः — गच्छामः ।)

— पूजालाल·

# वन्दे तां सुरभारतीम्

नित्यं या परिशोभते बहुविधैर्भावैः परं रञ्जिता-
नेकैर्नूतनशब्दसृष्टिकरणैर्मार्गैः सदा विस्तृता ।
रत्नानीव विभान्ति शास्त्रनिकरा यस्याः प्रशस्तोदरे
वन्दे ता सुरभारती बहुगुणां भाषावलीजन्मदाम् ।।१।।

ज्ञानाब्धिः स विभाति वेदनिचयो यामाश्रयन् सर्वदा
प्रीणन्त्येव सुरा भवन्ति वरदा यस्या गभीरैः पदै· ।
यद्ग्रन्थाः सुगुणैश्च तत्त्वनिकरैर्विद्यादिभिः पूरिता
वन्दे तां सुरभारती बहुगुणां भाषावलीजन्मदाम् ।।२।।

यत्काव्यानि विमोहयन्ति नवभिः पीयूषतुल्यै रसै-
श्छन्दोभिर्विविधैर्मनोहरतरैः कर्णामृतस्राविभिः ।
श्रोतॄन् वा परिवेषकान् गुणिजनान् विद्याधनग्राहकान्
वन्दे तां सुरभारती बहुगुणां भाषावलीजन्मदाम् ।।३।।

आयुर्वेदपुराणदर्शनगणैः साहित्यनाट्यादिभि-
र्ज्योतिःशास्त्रवरै. सदा विलसिता ज्ञानार्जने तात्त्विकम्
मार्गं या परम नयत्यविरलं विद्यार्थिभिः पूजिता
वन्दे तां सुरभारती बहुगुणां भाषावलीजन्मदाम् ।।४।।

देशेऽस्मिन् बहुसम्प्रदायजनितान् भेदान्निवार्येव हि
सौहार्दं वितनोति हिन्दुयवनख्रिस्तीयधर्मादिषु ।
आर्यैः संस्कृतसारतत्त्वनिहिता या राष्ट्रभाषा मता
वन्दे तां सुरभारतीं बहुगुणां भाषावलीजन्मदाम् ।।५।।

— पण्डितः हरेकृष्णधूपालशर्मा

# देवर्षिदर्शनम्

(**पात्राणि** — देवर्षिनारदः, पर्वतराजहिमालयः, तस्य पत्नी मेना, पुत्री उमा, परिचारिका कङ्कणा, प्रतिहारी ।)

(स्थलं पर्वतराजप्रासादः । अन्तरिक्षे श्रूयते ।)

ॐ नारायण नारायण !
हरिः ॐ नारायण नारायण !
सचराचरसञ्चारिन् भगवन् !
देवदेव पदयोस्ते प्रणमन् !

गायामि मधुरनाम प्रभो तव नाम ।
ध्यायामि च तव धाम धुरन्धरधाम ॥

(इति ज्योतीरेखामन्तरिक्षे अङ्कयन् देवर्षि राजप्रासादपार्श्वे अवतरति प्रतिहारी च त दृष्ट्वा)

प्रतिहारी – (ससम्भ्रमं प्रविश्य सप्रणामं हिमालयाय निवेदयति ।) देव ! देव ! देवर्षिनारदः स्वर्गात् समागतः ।

हिमालयः – त्वर्यतां त्वर्यतां तर्हि । (उत्थाय मेनांप्रति) देवि ! सत्वरम् आनयतु सत्कारसामग्रीम् ।

मेना – (कङ्कणां प्रति) कुसुमोपहारं देहि मे सत्वरम् ।

कङ्कणा – यदाज्ञापयति देवी । (कुसुमोपहारेण सहागत्य) अयमस्ति पुष्पोपहारः । गृह्णातु देवी ।

हिमालयः – (देवर्षि प्रत्युद्गम्य प्रणम्य च)
धन्योऽस्मि भगवन्नद्य सुभव्ये भवदागमे ।
दिव्येन दर्शनेनाहं पूतात्मा सहबान्धवः ॥
(एतदुक्त्वा अर्घ्यप्रदानपूर्वकं तम् अन्तर्गृहं नयति, पुण्यासने उपवेशयति, तदाज्ञया स्वयमपि सपत्नीको देवर्षेश्चरणसमीपे निषीदति ।)

नारदः – शिवं ते शैलराजेन्द्र प्रसन्नोऽस्म्यहमद्य ते ।
उन्नतात्मन् विराजस्व मूर्धनि त्वं महात्मनाम् ॥
(इत्याशीर्वचनमुच्चार्य) अपि सर्वथा कुशलं ते स्वर्गस्पर्धिनः पार्वतसाम्राज्यस्य ?

हिमालयः – अथ किम् । भगवन् ! भवादृशानां पुण्यप्रसादेन कुशलमेव सर्वं सर्वथा । इतः परं च कुशलतरं भविष्यत्येव । (मेनामुद्दिश्य) आहूयतां देवि भगवद्दर्शनार्थं पार्वती । (इङ्गितज्ञा परिचारिका शीघ्रमेव पार्वतीमुपस्थापयति ।)

हिमालयः – (पुत्रीं प्रति) वत्से, देवर्षिपादयोः प्रणामं कुरु ।

पार्वती – ओम् नमो भगवते । (इति सभक्तिभावं प्रणमति ।)

नारदः – श्रेयः परमवाप्नुहि । (इत्याशीर्वचनं ददाति । पार्वती आशीर्वचनं परिगृह्य नारदाज्ञया मातुः सकाशे उपविशति ।) अपि इयं सा ते सुपुत्री सर्वसंसारसौन्दर्यसारः ?

हिमालयः – ओम् भगवन् ! इयमेव सा अस्माकं सौभाग्यचन्द्रिका ।

नारदः – न केवलं युष्माकमेव, सा तु सर्वेषां लोकानां सनातनसौभाग्यचन्द्रिका । (पार्वती लज्जया अधोमुखी तिष्ठति ।) (हिमालयं प्रति)
अभिनन्द त्वमात्मानं पार्वतीपिण्डधारिणी ।
देवता देवतानां ते साक्षान्मङ्गलमन्दिरे ॥
(मेनां प्रति)
मेनके त्वं सुधन्यासि माताऽस्या अतिवत्सला ।
अङ्के ते विश्वलोकस्य महामाता विराजते ॥

मेना—(साञ्जलि) सत्यमेव भणितं भगवता । सम्मूर्ता सेश्वरी सत्ता विश्वमङ्गलकारिणी । अस्या नामोच्चारोऽपि प्राणान् आह्लादयति हृत्पद्मं च प्रफुल्लयति ।

नारदः—अपर च विधिनियतमेव एतत्, विश्वसिहि मयि यद् इय बाला साक्षान्महेश्वरस्य अनन्य-महिषीपदे महेश्वरीस्वरूपे शश्वद् विराजिष्यते। एतत्पादानतमस्तका देवा अपि अस्याः प्रसाद-प्रार्थयितारो भविष्यन्ति । सर्वे लोका एनाम् उपास्य परमानन्दभाजः भविष्यन्ति ।

मेनाहिमालयौ—अहो सर्वोत्तमसौभाग्यभागिनौ आवाम् । (पार्वती प्रति) वत्से, देवर्षेः चरणारविन्दयोः रजो नतमस्तके धारयस्व । ('ॐ नमो भगवते' इत्युच्चार्य पार्वती प्रणमति, नारदः तन्मस्तकोपरि हस्तौ निधाय पुनराशसते)

नारदः—वत्से ! विश्वेश्वरी भव । विश्वजननी भव । विश्वोद्धारिणी भव । (आसनात् उत्थाय) साधयामस्तावत् । (साञ्जलि पश्यत्सु सर्वेषु व्योममार्गम् आरोहति स्तोत्रगानं च श्रूयते ।)

जय जय जगज्जननि जय जय जय
जय सुखशान्तिविधात्रि ।
जय जय पर्वतराजपुत्रिके
जय वरवैभवदात्रि ।
दिव्यदर्शने जय विधुवदने
जय जय दुरितनिहन्त्रि ।
त्रिभुवनभाग्यविधात्रि भवानि
प्रपन्नपृथिवीपात्रि ।
जय हे जय हे
जय जय जय जय हे ।।

—पूजालाल.

## प्रज्ञा पातु

या प्रज्ञा मोहरात्रिप्रबलरिपुचय-
ध्वंसिनी मुक्तिदात्री
सानन्दाशाविधात्री मधुमयरुचिरा
पावनी पातु भव्या ।
सौजन्याम्भोजशोभा विलसतु विमला
सर्वदा सर्वथाऽत्र
साम्यस्निग्धा विशुद्धा भवतु च वसुधा
पुण्यवार्ताविमुग्धा ।।
या प्रज्ञा विश्वकाव्यामृतरसलहरी-
सारतत्त्वानुसन्धा
सद्भावानन्दकन्दा ह्यभयविभवदा
साम्यधर्मानुबद्धा ।

शुद्धाचारप्रदात्री निरुपमरुचिरा
सत्यपूताऽनवद्या
कल्याणं सन्ततं सा वितरतु विमला
शान्तिदा वेदविद्या ।।
या ज्ञानामृतमिष्टदं प्रददते
या लोकरक्षाकरी ।
या चोदारसुशीलशान्तविमला
या भक्तिसञ्चारिणी ।
या गोवृन्दनियन्त्रणातिकुशला
सा शारदा पातु नः ।
गीतावद् गरकण्ठवद् गगनवद्
गौराङ्गवद् गोपवत् ।।

ॐ शान्तिः ! शान्तिः !! शान्ति. !!!

—श्रीगङ्गाधरगुरुः

# भक्तस्य युक्तिः

आसीत् कश्चिद् भगवद्भक्तः । तस्य भक्त्याः प्रभावेण ईश्वरः प्रत्यक्षीभूय तम् अवदत् — वत्स, किम् इच्छसि ? वर वरय । भक्तः अवदत् — मम कापि आवश्यकता नास्ति । ईश्वर. अकथयत् — तव कापि आवश्यकता नास्ति चेत् मम सन्तोषस्य अर्थे किमपि याचस्व । तदा भक्तः अवदत् — यदि एव तर्हि जीवमात्रम् उद्धरतु । देवः अवदत् — पापनाश विना कस्यापि मुक्तिः भवितु न शक्नोति । जीवानां पापभारं कः वक्ष्यति ? भक्तः अवदत् — देव ! सर्वेषां पापानि अहं वक्ष्यामि । भवान् सर्वान् पापमुक्तान् करोतु । देवः अकथयत् — त्वं मम भक्तः । सर्वेषां पापानि तुभ्यं कथ दद्याम् ? भक्तः अकथयत् — इत्थं न करिष्यति चेत् सर्वेषां पापानि स्वयं हरतु । देवः अवदत् — इद सम्भवं नास्ति । भक्तः अकथयत् — असम्भवम् अपि नास्ति यतो हि भवान् ईश्वरः, सर्वशक्तिमान् । कर्तुम्, अकर्तुम्, अन्यथा कर्तुं भवान् एव समर्थः । देवः अवदत् — वत्स, त्वया यत् उक्तं तत् सत्यम् । किन्तु अहम् एतत् कर्तुं न इच्छामि । भक्तः अवदत् — यदि भवान् एतत् कर्तुं न इच्छति तर्हि आग्रहेण कुत. माम् अकथयत् "वर वरय" इति ?

तत् श्रुत्वा देवः अवदत् — तव वचन युक्तम् । तव विजयः जातः । अहं पराजितः । भक्तः अकथयत् — अधुना अहं न विजयी । मम विजयस्तु तदा भविष्यति यदा भवान् सर्वेषां कल्याणं करिष्यति । देवः अवदत् — सर्वेषां कल्याणं तु सम्भवं नास्ति । किन्तु ये मा सततं स्मरन्ति, सकल कार्यं मदर्थं कृत्वा मह्यमेव समर्पयन्ति, अह तेषाम् उद्धारम् अवश्यं करिष्यामि ।

भक्ताय इदं वचनम् अरोचत । —नरेन्द्रठक्कुरः

---

# सुभाषितानि

प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः ।<br>
त्रैलोक्ये दीपको धर्मः सुपुत्रो दीपकः कुले ।।

प्रदोषे — रात्रिमुखे, सायङ्काले । दीपकः — प्रदीपः, दीपः । प्रभाते — प्रात.काले । रविः — सूर्य., दिवाकरः । त्रैलोक्ये — त्रिभुवने, त्रिलोके । धर्मः — सत्यनियमः । कुले — कुटुम्बे, गृहे । सुपुत्रः — उत्तमपुत्रः, योग्यपुत्रः, विनीतपुत्रः ।

प्रदोषसमये कः दीपकः भवति ? प्रदोषसमये चन्द्रः दीपकः भवति । प्रातःकाले कः प्रदीपः ? प्रातःकाले सूर्यः प्रदीपः । सूर्यः कदा उदयति ? सूर्यः प्रभाते उदयति । त्रिभुवने कः प्रदीपः ? त्रिभुवने धर्मः प्रदीपः । धर्मः कः ? धर्मः सत्यस्य नियमः । धर्म एव त्रिलोकं धारयति । धर्मः सदा सेव्यः (सेवनीयः) । कः सुपुत्रः ? यस्य शीलं शोभनं सः सुपुत्रः । सुशीलः पुत्रः गृहस्य शोभा, कुटुम्बस्य कान्तिः, कुलस्य दीपकः । सुपुत्रः आनन्दयति मातरं पितरं च । सुपुत्रस्य मस्तके कुलस्य आशीर्वादाः वर्षन्ति । सुपुत्रम् एव इच्छन्ति गृहस्थाः, न तु कुपुत्रम् ।

वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् ।<br>
वृथा दानं समर्थाय वृथा दीपो दिवापि च ।।

समुद्रेषु — सागरेषु । वृष्टिः — वर्षः, पर्जन्यः ।

वृथा — व्यर्था, निरर्थका, निरर्थिका । तृप्तस्य — सन्तुष्टस्य, परिपूरितस्य । भोजनम् — खाद्यम्, भोज्यसामग्री । समर्थाय — सम्पन्नाय, धनिकाय । अपि च — किञ्च, अथ च । दिवा — दिवसे, दिने । चेत् — यदि ।

वर्षाकाले मेघाः वर्षन्ति । वृष्टिं विना सस्यानि न भवन्ति । वृष्टिं विना वनानि शुष्यन्ति, वृक्षाः न जीवन्ति । मरुस्थलेषु शुष्केषु च क्षेत्रेषु वृष्टिः उचिता । किन्तु समुद्रेषु वृष्टिः भवति चेत्, सा वृथा एव । सागरेषु मेघवर्षणं निष्प्रयोजनम् । तेन किमपि कार्यं न सिध्यति ।

पूर्णभोजनस्य अन्ते अपरं खाद्यम् अनावश्यकम् । पूर्णभुक्तस्य जनस्य अर्थे भोजनस्य परिवेषणं निरर्थकम् । तस्मै प्रदत्तम् अन्नं वृथा नश्यति । तद्वत् धनिकाय, सम्पन्नाय दानम् अपि वृथा । दरिद्रेभ्यः दयाभावः दर्शयितव्यः, न तु धनिकेभ्यः । दरिद्राः एव दानयोग्याः । ते दानम् अर्हन्ति । इत्थम् एव दिवासमये दीपस्य का आवश्यकता ? सूर्यस्य प्रकाशः सर्वत्र वर्तते एव । अन्धकारः कुत्रापि न भवति । पृथिवी प्रकाशिता विभाति । तदा कः मूर्खः दीपकं प्रज्वलयिष्यति ? तदा दीपेन किं प्रयोजनम् ? सूर्यस्य आतपे (प्रकाशे) ज्वालितः दीपः वृथा एव ।

पिबन्ति नद्यः स्वयमेव नाम्भः
स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं स्वयमम्बुवाहाः
परोपकाराय सतां विभूतिः ॥

नद्यः स्वयम् एव अम्भः न पिबन्ति । वृक्षाः स्वयं फलानि न खादन्ति । अम्बुवाहाः स्वयं सस्यं न अदन्ति । सतां विभूतिः परोपकाराय ।

नद्यः — सरितः । अम्भः — जलम्, अम्बु, नीरम् । वृक्षाः — पादपाः, तरवः । अदन्ति — खादन्ति, भक्षयन्ति । सताम् — सत्पुरुषाणाम् । विभूतिः — सम्पत्तिः ।

जनाः प्रायः स्वार्थपरायणाः भवन्ति । परेषाम् उपकाराय ते धनादिकं न वितरन्ति । स्वसुखार्थम् एव ते धनस्य व्ययं कुर्वन्ति । विरलाः दाने प्रीतिं दर्शयन्ति । किन्तु सरितः, तरवः मेघाः च परोपकाराय एव जीवन्ति । नद्यः जलेन पूर्णाः वहन्ति । ताः निजजलं परोपकाराय एव प्रयच्छन्ति । ताः स्वयं स्वजलं न पिबन्ति । तथैव वृक्षाः अपि स्वफलानि स्वयं न खादन्ति । विहङ्गाः (पक्षिणः), केचित् जीवाः मनुष्याः च वृक्षाणां फलानि भक्षयन्ति । इत्थं वृक्षाणां फलानि सर्वेषाम् उपकाराय भवन्ति । उदाराः पादपाः स्वकीयां फलरूपसम्पत्तिं परोपकाराय समर्पयन्ति । मेघाः समुद्रस्य क्षारं जलं पिबन्ति । किन्तु मधुरं जलं भुवनाय प्रयच्छन्ति । ते लोकानाम् उपकारार्थं आकाशे भ्रमन्ति अमृतस्य वृष्टिं च कुर्वन्ति । जलस्य वर्षणेन विविधानि सस्यानि उद्भवन्ति । किन्तु मेघाः तानि सस्यानि स्वयं न खादन्ति । सर्वे जीवाः सस्यं खादन्ति तेन च जीवन्ति । सत्पुरुषाः अपि परोपकाराय एव जीवन्ति । सज्जनानां सम्पत्तिः परेषां दुःखनिवारणाय एव । सन्तः स्वार्थं त्यजन्ति परमार्थं च भजन्ति । लोकानां कल्याणम् एव ते वाञ्छन्ति तदर्थं च प्रयस्यन्ति (प्रयतन्ते) प्रेमभावेन । — पूजालालः

# तरणं जानासि किम् ?

एकदा केचित् जनाः नौकया गङ्गानदीपार गच्छन्ति स्म । यात्रिकेषु एकः पण्डितः आसीत् । सः स्वस्य पाण्डित्य-प्रकाशनम् अकरोत् । पण्डितः अहङ्कारेण अवदत् — "अहं वेदाः, वेदान्तः, श्रुतिः, स्मृतिः, उपनिषदः इत्यादिशास्त्राणां षड्दर्शनानां च सम्यक् अध्ययनं कृतवान् । अस्मिन् देशे कोऽपि ज्ञानवान् तर्कशास्त्रे मया सह स्पर्धां कर्तुं न समर्थः ।"

एवम् आत्मश्लाघानन्तरं पण्डितः सावमानं सहगामिनमेकम् अपृच्छत् —

"भवतः वेदान्तज्ञानम् अस्ति वा न वा ?" सहयायी प्रत्युवाच, "नहि श्रीमन् !" पण्डितः पुनः तम् अपृच्छत् —

"भवतः किञ्चित् तत्त्वज्ञानम् अस्ति किम् ?"

"किञ्चदपि नहि पूज्यपण्डितवर्याः !"

"साङ्ख्ययोगः, पतञ्जलेः सूत्राणि ज्ञायन्ते किम् ?"

"नहि स्वामिन् !"

इत्थमेव पण्डितः दर्पेण वारंवारम् इदमब्रवीत् — "तत्त्वविद्या-शास्त्राणि सर्वाणि ज्ञायन्ते मया ।"

अपरे यात्रिकाः एतत्सर्वं श्रुत्वा तूष्णीम् उपविष्टाः आसन् । अचिरादेव उग्रः महाझञ्झावातः अभूत् । चण्डवातस्य प्रबलशक्त्या नौका इतस्ततः चलन्ती नद्या निमग्नप्राया आसीत् । तस्मिन्नेव क्षणे पण्डितेन आरम्भाद् एव प्रश्नैः निरन्तरं पीडितः सहयायी अपृच्छत् — "भो ज्ञानिन्, भवान् तरणं जानाति किम् ?" पण्डितः उवाच — "नहि ।"

तदा सहयायी नम्रतया अवदत् —

"हे प्रभो ! साङ्ख्यस्य वा पतञ्जलेः वा सूत्राणि ज्ञायन्ते त्वया । किन्तु अहं जले तरितुं जानामि ।" एतद् उक्त्वा सः नद्याम् उत्प्लुत्य परतीरं प्राप्तवान् ।

अनेकधर्मग्रन्थानां पठनेन मानवस्य किमपि प्रयोजनं न सिध्यति । अस्मिन् लोके केवलम् एकः एव विषयः अपेक्षणीयः । भवार्णवतरणे सुप्रतिष्ठितमार्गः कः इति सर्वदा चिन्तनीयम् । परमेश्वरः एव सत्यम्, अन्यत् सर्वम् ऐन्द्रजालिकम् । विश्वमिदं मायामयम् ।

(Tales and Parables of Sri Ramakrishna इति पुस्तकात् अनूदितम् ।)

अनुवादकः — जि. कृष्णन्

# महाभारतीयचेतनायाः प्राणकेन्द्रं संस्कृतम्

जीवस्य शरीरे सर्वेषाम् अवयवानां रक्तमांसास्थिमज्जानां च पारस्परिक-संहतिपूर्णावस्थानात् जीवः स्वकर्तव्यं यथारीति सम्पादयति । अन्यथा स विकृतः सन् कर्मसम्पादने क्षमो न भवेत् । इत्थमेव यस्य कस्यापि देशस्य जातीयसंहतिरक्षणे नागरिकाणां पारस्परिक-सुसम्पर्कविधानं परमकर्तव्यम् । नो चेत् देशो दुर्बलः सन् जातीयकर्मसम्पादनं कर्तुं समर्थो न भवेत् ।

अत एव प्रत्येकदेशस्य नागरिकाणां पारस्परिकसंहतिरक्षणेन जातीयमैक्यं दृढीभवति । ऐक्यस्य दृढतया सर्वविधा उन्नतिः सुकरा भवति शत्रूणां प्रतिरोधनं च सुसाध्यम् । यः दुर्बलतमो नागरिकः तस्य

जातीयस्वार्थसाधने कापि भूमिका नास्तीति न विचारणीयम्। सबलदुर्बलयोरुभयोः कृते जन्मभूमिः समाना। प्रत्येकनागरिकेण स्वशक्ते अल्पमपि देशाय जातये च उत्सर्जनीयम्। इत्थं प्रत्येकनागरिकेण उत्सृष्टशक्तीनां मिलनेन सुमहत् कार्यं नूनं सम्भवेत्। उक्तं च नीतिविशारदेन कविना—

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः॥

यदि गुणीकृतेन असारतृणपुञ्जेन मत्तो हस्ती बध्येत तर्हि स्वल्पसंबलविशिष्टानां जनानां मिलनेन महाजातीयकर्मसिद्धिः कथ न भवेत्?

अस्माकं जन्मभूमि-विशालभारतवर्षेऽस्मिन् बहुभाषाभाषिणो बहुजातिसम्प्रदायविशिष्टाः जनाः निवसन्ति। धर्म-भाषा-सम्प्रदायदृष्टया जनाना रुचिर्भिन्ना। परन्तु देशजातिकर्मणि सर्वे समभावेन, समदृष्टया सहानुभूतिशीलतया च सहयोगं कुर्युः। सामूहिकजातीयकर्मणि भेदभावः न पोषणीयः।

प्राचीनकाले यद्यपि जातिभेदो नासीत् तथापि आर्यानार्यादि-गोष्ठीगतविभेदो वर्तते स्म। तस्मात् तदा पारस्परिकसङ्घर्षो जायते स्म। तेन भारतीयम् ऐक्यं खण्डितं भवेत् इत्याशङ्क्य महर्षिरगस्तिः अन्ये च आर्याः आर्येतराणा मनसि महाभारतीयचेतना जनयितु विभिन्नस्थानानि अगच्छन्। तेषां प्रभावेण आर्यानार्याणां मध्ये समन्वयः सस्थापितः। तं समन्वयं विवर्धयितु प्रागाचार्यैः गीतम्—

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु मा विद्विषावहै॥

एतेन सूच्यते—वयं सर्वे मिलितभावेन पारस्परिकरक्षणम्, जीवनयापनम्, पराक्रमप्रकाशनम्, तेजोवीर्यविवर्धनं हिंसाद्वेषविवर्जनं च कुर्याम।

भारतवर्षस्य विभिन्नराज्यानां सांस्कृतिकपरम्परासु भिन्नता विद्यते। परन्तु प्रत्येकसंस्कृतिपरम्परायाः मौलिकम् उद्देश्यम् एकम्। यतो मनीषिभिः कथितम्—

या मानवानां सुगुणान् तनोति
　　धर्मप्रवृत्ति च दृढीकरोति।
सत्यानुरक्ति विदधाति नित्यं
　　सा संस्कृतिः सर्वजनैः सुसेव्या॥

सा एव सस्कृति या मानविकगुणान् विकासयति, धर्मप्रवृत्ति दृढीकरोति, सत्ये अनुरक्ति जनयति। प्रत्येकसांस्कृतिकपरम्परायाम् एते गुणा नून सन्तीति सूक्ष्मदृष्टया विचार्य आर्यजना आर्येतरजनानां संस्कृतिम्, परम्पराम्, देवपूजादिकम् आर्येतरजनाश्च आर्यजनाना संस्कृतिम्, परम्पराम्, वैदिकदेवपूजादिक स्वीकृतवन्त.।

कस्यचित् प्रान्तस्य जन. अपरप्रान्तस्य जनात् आत्मानं हीनं न मन्येत इति विचार्य प्राचीनमहर्षिभिः विभिन्नप्रान्तीय-नदनदीनां जलं पवित्रम् इति कीर्तितम्। तेषामुपदेशानुसारेण स्नानकाले, सङ्कल्पकाले देवपूजादिषु च एतत् चिन्तनीयम्—

गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु॥

किञ्च तैः विविधस्थानेषु तीर्थक्षेत्राणि स्थापितानि यत्र गत्वा जनाना मध्ये सुसम्पर्कः वर्धते गोष्ठीगत-भेदभावश्च दूरीभवति। सर्वेषां मनसि जन्मभूमिप्रीतिं द्रढयितु मर्यादापुरुषोत्तमश्रीरामचन्द्रमुखेन पृथिव्याः आदिकवि-वाल्मीकिमहर्षिणा वज्रगम्भीरकण्ठेन उद्घोषितम्—

जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

परन्तु अधुनातनयुगे शिक्षासभ्यताभिवृद्धौ सत्यामपि आत्माभिमानपरायणाः, प्रबलस्वार्थपराः,

क्षमतालोभिनः सन्त. कतिपयाः संकीर्णविच्छिन्नतावादिनो धर्मान्धाः देशे साम्प्रदायिकविभेदं प्रबलतरं सृजन्ति । घोरधर्मान्धिता एतस्य मूलकारणम् । यदि जनाः गोष्ठीसम्प्रदायगत-मनोभावविजडिताः, क्षमतालिप्सया भोगविलासपरायणाः स्युः तर्हि जातीयजीवनं छिन्नभिन्नं भवेत्, देशोऽपि खण्डविखण्डितः स्यात् । अधुना कतिपया विच्छिन्नतावादिनः प्रादेशिक - मनोवृत्त्या महाभारतीयचेतनां विस्मृत्य हिंसाद्वेषवशीभूताः सन्तः जातीयसम्पत्ति नाशयन्ति नरहत्यां च कुर्वन्ति । एतेन जातीयसंहतिः तथा नश्यति यथा कालक्रमेण देशस्य स्वाधीनतापि विपन्ना भवेत् ।

एतादृशि सन्धिक्षणे सर्वे नागरिका. विशेषतो देशस्य मुख्यनेतारः जातीयकर्तव्यविषये सचेतना भवेयुः । जातीयचेतनासर्जने नेतृणां भूमिकातीव महत्त्वपूर्णा । तेषां चरित्रं धर्मान्धता-संकीर्णता-क्षमतालिप्साशून्यं भवेत् यतो हि साधारणनागरिकाः तान् अनुकुर्वन्ति । स्वयं भगवता श्रीकृष्णेन गीतायामुक्तम् —

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ।।

जगति यत् किञ्चिदस्ति तत् सर्वमीश्वरीयम् । यदि प्रयोजनीयताम् अतिक्रम्य कश्चिदधिकं संगृह्णाति तर्हि स ईश्वरद्रोही भवति । अतः अन्येषाम् आवश्यकतापरिपूरणाय सर्वैः निर्लोभता सेवनीया । जनगणहृदये तादृशी निर्लोभतां जनयितुं मनीषिभिरुपनिषदि गीतम् —

ईशा वास्यमिदं सर्वं यत् किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ।।

अतः नेतृस्थानीयजनाः निःस्वार्थनि स्पृहाः सन्तः आचरणं कुर्युः । यदि ते तथा करिष्यन्ति तर्हि साधारणजनसमाजोऽपि तथा करिष्यति । महात्मगान्धिना स्वकीयजीवने एतत् सम्यगाचरितम् । दक्षिणाफ्रिकासु एतस्मिन् देशे च जनसमाजप्रदत्तं बहुमूल्यमुपहारं सोऽकुण्ठचित्तेन समाजकल्याणाय उत्सृष्टवान् । स्वयं भगवता श्रीकृष्णेनाप्युक्तम् —

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।।

जीवनयज्ञे निःस्वार्थ - संहति - सौजन्यसम्पन्न - कर्मसम्पादनाय प्राचीनमन्त्रदर्शिमुनिभिः ऋग्वेदे गीतम् —

सं गच्छध्व सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सं जानाना उपासते ।।
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ।।

एतेन सूच्यते — वयं सर्वे मानवाः साधारणतः समोपादानेन सृष्टाः । अस्माकमाकूति-हृदयमनासि समानानि । अतस्ते आर्यप्रवरा यजुर्वेदे सदृष्टान्तम् अस्मभ्यं प्रेरणां प्रयच्छन्तः कथयन्ति —

मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे
मित्रस्य चक्षुषा समीक्षामहे ।

यथा सूर्यः सर्वं समदृष्टचा पश्यति तथा वयं सर्वे समभावापन्ना भवेम ।

परन्तु दीर्घकालीन - पराधीनतया पाश्चात्यशिक्षाप्रभावेण च अस्माभिः संस्कृतग्रन्थादिषु निहितं स्वर्गीयममृतवर्षि महत्त्वं विस्मृतम् । स्वाधीनताप्राप्तेः त्रिचत्वारिंशद्वर्षेभ्यः परमपि संस्कृतशास्त्रनिहितं तद्वैशिष्टचम् अस्माभिः नालोच्यते नानुस्त्रियते च । अतो जातीयसंहतिः ऐक्यचेतना च विलुप्तप्राया । अस्यां देवभूमौ पैशाचिकहत्याविभीषिकादयः क्रमशो वर्धन्ते । देशस्याखण्डता सम्प्रति विपन्ना । एतादृशि दुष्काले भारतस्य सहतिः, ऐक्यम्,

संस्कृतिः, अखण्डता इत्येषां सुरक्षार्थं संस्कृत-ग्रन्थनिहिता महाभारतीयचेतना पर्यालोचनीया, प्रसारणीया अनुशीलनीया च । प्राचीनकालात् संस्कृतम् एव दिव्यज्ञानसृष्टिमाध्यमेन जनचेतसि देवत्वं सञ्चारयति । तेन भावेनोद्बुद्धाः भारतीया भ्रातृत्वसम्पन्ना एकतापाशबद्धा नूनं स्युः इति नास्त्यत्र सन्देहः । अति प्राचीनकालात् संस्कृतमेव महाभारतीयचेतनायाः प्राणकेन्द्रम्, नान्या काचित् प्रान्तीयभाषा । अतो जयतु संस्कृतम्, जयतु भारतम् । —प. हरेकृष्णधूपालशर्मा

[सद्य. अमेरिकादेशीय. शल्यशास्त्रवित्, प्रकाण्डविद्वान् Dr. Rama Coomaraswamy अवदत् — For a person from the East not well versed in Sanskrit is to go through life without cultural roots. Even today, in West, none is considered educated in the true sense if he or she does not know Greek or Latin. It is laziness and stupidity to give up Sanskrit.

(The Hindu, Dated 24. 2. 91, p. 16)

तस्य अन्तिमवाक्यं स्वामिविवेकानन्दस्य वचनं स्मारयति — Sanskrit and prestige go together in India. As soon as you have that none dare say anything against you. —स०]

# स्वराज्यम्

(कथावस्तु काल्पनिकम्)

अयोध्यानगरी म्लाना । सर्वत्र उदासीनता । वातावरणं विषण्णम् । जनमानसे शोकच्छाया । वृद्धो रामचन्द्रः पीडितः । अतः दर्शनार्थं प्रवेशोऽद्य निषिद्धः । द्वाररक्षी लक्ष्मणः । तन्निकटे राजाज्ञा बलवती । अतः स न कमपि अन्तः प्रवेशयति । राजाज्ञा अद्य कठोरा वर्तते । यः कोऽपि भवतु नाम सोऽद्य दर्शनं न प्राप्स्यति । इयं रामस्य इच्छा । इमामेव इच्छां पालयितुं पूरयितुं च लक्ष्मणः दृढप्रतिज्ञः । लक्ष्मणः किञ्चिद् अवसन्नः । समयेऽस्मिन् दुर्वासाः समुपस्थितः । रामस्य दर्शनाय सः अभिलाषं प्रकटितवान् । विनयी लक्ष्मणः तं न्यषेधत् । किन्तु दुर्वासाः बलात् गन्तु प्रवृत्तः । लक्ष्मणेन पुनः स वारितः । दुर्वासाः कोपशीलः । लक्ष्मणस्य व्यवहारेण स नितरां कुपितः । सः सदर्पम् अगर्जत् — अरे... न मां वेत्सि ? मामपि वारयसि ? कियती मे शक्तिरिति जानासि ? निमेषमात्रेणैव त्वाम्, रामम् अयोध्यानगरी च भस्मसात् करिष्यामि । ...भस्मसात् करिष्यामि ।

एवं गर्जनं कृतवान् दुर्वासाः । लक्ष्मण. व्याकुलः सञ्जातः । इतः राजाज्ञा, ततः महर्षेः कोपः । स किं कुर्यात् ? इदानी स कर्तव्यसङ्कटे निपतितः । यदि महर्षिम् अन्तः प्रवेशयेत् तर्हि राजाज्ञानुसारत. मृत्युदण्डेन स दण्डनीयो भवेत् । यदि न प्रवेशयेत् तर्हि क्रुद्धोऽयं महर्षिः समग्रं राज्यं भस्मसात् करिष्यति । एवं विचिन्त्य लक्ष्मणः निरुपायः सञ्जातः । इतः दुर्वासाः कोपेन ज्वलति । सहसा लक्ष्मणस्य प्रज्ञा उदिता । निजजीवनविनिमयेन देश एव रक्षणीय इति

विचिन्त्य लक्ष्मणः प्रवेशाय महर्षिम् अनुमतवान् ।

एतेन रामचन्द्रः दुःखी सञ्जातः । सपदि लक्ष्मणम् आहूय अपृच्छत् — किमेतत् कृतवान् ? राजाज्ञायाः लङ्घनं किमर्थं कृतम् ?

लक्ष्मणः सविनयम् अवदत् — महाराज ! स्वकर्तव्यं मया सम्पादितम् । भवान् अपि स्वकर्तव्यं करोतु । रामचन्द्रः मर्माहतः । वार्धक्येऽस्मिन् लक्ष्मणः मृत्युदण्डेन दण्डितः इति विचिन्त्य रामचन्द्रः व्यथितोऽभवत् ।

स्वेच्छया मृत्युदण्ड स्वीकृत्य लक्ष्मणः स्वर्लोकं गतवान् । लक्ष्मणं विना रामचन्द्रः कथं नु जीवेत् ? लक्ष्मण ! .. लक्ष्मण ! ...इति आहूय विभाव्य च अन्ततो रामचन्द्रः दिवं गतः ।

उक्तं च ऋग्वेदे —

न मिनन्ति स्वराज्यम् । १० १५.३
विवेकिनः स्वराज्यं न नाशयन्ति ।

— डॉ. केशवचन्द्रदाशः

वेत्सि — जानासि । मिनन्ति — हिंसन्ति ।

---

# राष्ट्रभारती भवतु संस्कृतम्

राष्ट्रभारती भवतु संस्कृतम्
लोकभारती भवतु संस्कृतम् ।।

सर्वासां वाचां जनयित्री
भारतीयभावनासवित्री
लोकमङ्गलं दिशतु संस्कृतम्
राष्ट्रभारती भवतु संस्कृतम् ।।

वेदपुराणोपनिषल्लीनम्
कालिदासकवितारसपीनम्
निखिलभारतं पठतु संस्कृतम्
राष्ट्रभारती भवतु संस्कृतम् ।।

राष्ट्रियपशुः केसरी घुष्टः
गृहे गृहे तत् किमसौ दृष्टः
महिमानं घोषयतु संस्कृतम्
राष्ट्रभारती भवतु संस्कृतम् ।।

संस्कृतमखिलभारतीमूलम्
अपनेष्यति नूनं हृच्छूलम्*
हृन्दि हृदा बध्नातु संस्कृतम्
राष्ट्रभारती भवतु संस्कृतम् ।।

भवतु संस्कृतं राष्ट्रियभाषा
नूनमुदेष्यति सहगमनाशा
नवराष्ट्रं विदधातु संस्कृतम्
राष्ट्रभारती भवतु संस्कृतम् ।।

हृन्दि — हृदयानि । हृदा — हृदयेन ।

— मिश्रोऽभिराजराजेन्द्रः

---

* अभिराजराजेन्द्रमहोदयेन तथ्यमेव प्रकाशितम् अस्यां सुन्दरकवितायाम् । 'हिन्दीभाषा हिन्दीभाषिप्रदेशस्य अर्थे एव साधुः, न तु समग्रभारतस्य अर्थे । संस्कृतमेव भारतीयानाम् अर्थे श्रेयस्करम् ।' भारतस्य ऐक्यसंरक्षणे भाषासमस्यायाः समाधाने च संस्कृतमेव अनन्यसाधनम् । कविवरेण श्रीमातुः संस्कृतविषयकाः अभिप्रायाः अत्र सुष्ठु अभिव्यञ्जिताः । अभिनन्दामः तं वयम् । –सं०

# परिवर्तनम्

गुणानुरागी राजा भोजः मालवादेशे राज्यं करोति स्म । तस्य राज्यव्यवस्था तथा आसीत् यथा कोऽपि तत्र चौर्यं कर्तुं न उत्सहते स्म ।

तस्मिन् राज्ये आसीत् कश्चित् नराधम. दुर्मुखः नाम । उज्जयिनीनगरे स चौर्यं कर्तुं बहु अयतत किन्तु सर्वदा असफलः अभवत् । अन्ते खिन्नः सः राज्यं त्यक्त्वा वनं गतः । वने कश्चित् आश्रमः आसीत् । तत्र स साधुमहाराजं वासस्थानम् अयाचत । साधुः तस्मै न केवलं वासस्थानम् अददात्, तस्य आतिथ्यमपि अकरोत् । अतिचकितः चोरः तत्रैव रात्रिम् अयापयत् । परदिने सः साधु स्वकीयगुरुं कर्तुम् इच्छन् तस्य सकाशं गत्वा शिक्षां प्राप्तुम् इच्छां प्राकटयत् ।

साधुः अवदत्—वरम् ! उपदेशं ददामि किन्तु त्वया मम वचनद्वयं स्वीकरणीयम् आचरणीयं च । प्रथमम्, कदापि असत्यं न वद । द्वितीयम्, यस्मिन् गृहे खादसि तत्र चौर्यं मा कुरु । अन्यान् दुर्गुणान् त्यजेः न वा किन्तु एतत् वचनद्वयं त्वया आचरणीयम् ।

सः गुरोः वचनं स्व्यकरोत् । परन्तु स्वभावः दुरतिक्रमः ।

एकदा दुर्मुखः सामन्तस्य वेशं धारयित्वा भोजराजस्य प्रासादे चौर्यं कर्तुं गतः । द्वारपालः तम् अपृच्छत्—कस्त्वम् ? अहं चोरः इति दुर्मुखः उदतरत् ।

द्वारपालः चकितः । कोऽपि चोरः आत्मानं चोरं न घोषयति । एष कदापि चोरः भवितुं न शक्नोति । निश्चितम् एष सामन्तः एव । एवं विचार्य द्वारपाल· तस्मै निर्विघ्नं प्रवेशं दत्तवान् ।

दुर्मुखः मनसि गुरोः प्रतापं प्रशंसन् अभ्यन्तरं गत्वा कस्मिंश्चित् कोणे गुप्तम् अतिष्ठत् । किञ्चित्कालात् परं राजा बहिर्निर्गतः । चोरः अवसरं प्राप्य मणिमुक्तादीनां पोटलीं कृत्वा यदा प्रस्थातुम् उद्यतः तदा तस्य दृष्टिः चतु.षष्टिमिष्टान्नैः सज्जितायां भोजनस्थाल्याम् अपतत् । परन्तु यदा सः खादितुम् अगच्छत् तदा तस्य मनसि गुरोः द्वितीयशिक्षायाः स्मृतिः जागरिता "यस्मिन् गृहे खादसि तत्र चौर्यं मा कुरु" इति । स्थालीं त्यक्त्वा पोटलीं च विहाय गुप्तमार्गेण सः प्रासादात् बहिर्निर्गतः ।

राजा प्रत्यागत्य अद्भुतं चोरकार्यं दृष्ट्वा चकितः । परदिने सः द्वारपालं चोरस्य अन्वेषणाय प्रेषितवान् । बहुकालम् अन्वेषणात् परं सः दुर्मुखः राज्ञः समक्षम् आनीतः ।

दुर्मुखः राजानं यथायथं सत्यम् अवदत् । राजा तस्मै विपुलं धनं दत्त्वा तम् अमोचयत् ।

चोरः अचिन्तयत्—"मम गुरुः अतीव प्रतापी । धन्योऽधुनाहम् । पुरस्कारधनमिदं गुरुचरणे निवेद्य आश्रमे निवस्तुं निवेदयिष्यामि । गुरोः वचनस्य आचरणेन मया समाजे सम्मानः प्राप्तः, राजमानं धनं च लब्धम् ।"

शनैः शनैः दुर्मुखस्य सर्वे दुर्गुणाः दूरीभूताः । सः दुर्मुखतां परित्यज्य सुमुखः नाम महात्मा अभवत् ।

—सुमेधाः

# नीतिशतकम्

[भर्तृहरिः नीतिशतकस्य रचयिता । नीतिशतके भर्तृहरेः रचनाशैल्याः आर्यव्यक्तित्वस्य च वैशिष्ट्यं सुस्पष्टम् । श्रीअरविन्दः नीतिशतकस्य अनुवादम् आङ्ग्लभाषया अकरोत् । अनुवादेन सह मूलश्लोकाः न प्रदत्ताः । अत्र वयं मूलश्लोकान् तेनैव क्रमेण प्रकाशयामः येन क्रमेण श्रीअरविन्दस्य आङ्ग्लानुवादाः वर्तन्ते । मूलश्लोकानां भावं संस्कृतभाषया बोधयितुं वयम् अत्र अन्वयम् अर्थं च योजयामः । ये आङ्ग्लानुवादं पठितुम् इच्छन्ति ते कृपया श्रीअरविन्दस्य शताब्दीग्रन्थं* पश्यन्तु । –सं०]

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ।।

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये, स्वानुभूत्येकमानाय, शान्ताय तेजसे नमः (अस्तु) ।

दिक्—दिशा । कालः—भूतकालः, भविष्यत्-कालः वर्तमानकालश्च । दिशश्च कालाश्च आदौ येषां ते दिक्कालादयः । आदिशब्देन गुणादयः, घटपटादिकं वस्तुजातम् आकाशादिकं च गृह्यन्ते । अनवच्छिन्ना — अपरिमिता, असङ्कुचिता । अनन्ता —अविनाशिनी । चिद् एव चिन्मात्रम्—ज्ञानमयी । मूर्तिः — स्वरूपम् । दिक्कालाद्यनवच्छिन्नानन्त-चिन्मात्रमूर्तये — दिक्कालादिभिः अनवच्छिन्ना, अनन्ता चिद् एव मूर्तिः यस्य तस्मै । स्वस्य अनुभूतिः (अनुभवः) स्वानुभूतिः एव एकं मानं (प्रमाणम्) यस्य तस्मै = स्वानुभूत्येकमानाय, स्वानुभवगम्याय । तेजसे—प्रकाशरूपाय (परब्रह्मणे)।

नमः । कस्मै ? तेजसे । कीदृशं तेजः ? शान्तम्, स्वानुभूत्येकप्रमाणम्, दिक्कालादिभिः अनवच्छिन्नम्, अनन्तम्, चिन्मात्ररूपम् ।

यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परिशुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च ।।

[अहम्] यां सततं चिन्तयामि सा मयि विरक्ता (न अनुरक्ता) । अपि (अपि च) सा अन्यं जनम् इच्छति । सः जनः अन्यसक्तः (अन्यस्यां रमण्याम् आसक्तः) । काचित् अन्या अस्मत्कृते (मदर्थम्) परिशुष्यति (प्रेमाग्निना स्वतनुलतां दहति, क्षीण-शुष्कदेहा भवति) । ताम् (मत्पत्नीम्), तम् (तस्याः प्रेमिकम्), मदनम् (कामदेवम्), इमाम् (एनां मयि अनुरक्ताम्) धिक् ।

अत्र इयं किंवदन्ती श्रूयते — एकदा कोऽपि सन्न्यासी अस्य श्लोकस्य लेखकाय राज्ञे भर्तृहरये जरामृत्युहरं फलमेकम् उपाहरत् । पत्नीपरायणः राजा भर्तृहरिः स्वप्रियतमायै तत् अयच्छत् । अन्यपुरुषासक्ता सा तत् स्वप्रेमिकाय आर्पयत् । सः प्रेमिकः अन्यस्यां रमण्याम् अनुरक्तः आसीत् । स तस्यै अददात् । सा प्रजानुरञ्जके, गुणवति भर्तृहरौ प्रीणाति स्म । अतः तस्य दीर्घायुष्यं कामयमाना सा तस्मै तत् उपाहरत् । इत्थं स्वप्राणवल्लभायै राज्ञ्यै प्रदत्तं फलम् अन्यस्याः रमण्याः हस्तात् प्राप्य राजा स्वप्राणप्रियायाः गुप्तप्रणयरहस्यम् अजानात् । अथ तस्मिन् वैराग्यम् उदितम् । स स्वभ्रात्रे राज्यभारं

*Sri Aurobindo Birth Centenary Library, Vol. 8, p. 157.

दत्त्वा वनाय प्रस्थितः । तेनैव महामतिना संस्कृत-साहित्यभाण्डारे रत्नायमान शतकत्रयं रचितम् — नीतिशतकम्, वैराग्यशतकम्, शृङ्गारशतकम् इति । केचित् विज्ञानशतकमपि तस्य रचनासु गणयन्ति ।

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥

अज्ञः (मूर्खः) सुखम् (सुखेन, अनायासम्) आराध्यः (आराधयितुम्, प्रसादयितुम्, बोधयितु शक्यः) । विशेषज्ञः (अधिक-ज्ञानशाली जनः) सुखतरम् (अधिकसौकर्येण, ततोऽपि सुखेन) आराध्यते । [किन्तु] ज्ञानलवदुर्विदग्धं (ज्ञानस्य लवेन कणिकया दुर्विदग्धम्, दुर्विनीतम्, धृष्टं नरं ब्रह्मा अपि न रञ्जयति (न प्रसादयति, प्रसन्नं कर्तुं न शक्नोति) ।

# महर्षिनारदस्य अभिमानभङ्गः

हिमालयपर्वते एका अतिपवित्रा गुहा आसीत् । तस्याः निकटे गङ्गा प्रवहति स्म । तत्र दृश्यम् अपि अतिपवित्रं मनोहरं च अभवत् । एकदा महर्षिः नारदः भ्रमन् तत्र आगतः । तत्स्थानस्य पवित्रतां दृष्ट्वा स तत्रैव तपश्चरितुं निश्चयम् अकरोत् । स भगवन्तम् अस्मरत् श्वासं च अरुणत् । तस्य मनः निर्मलम् आसीत् । अतः तेन सहजसमाधिः प्राप्तः । शतसहस्रायुतं वर्षाणि व्यतीतानि । किन्तु महर्षि-नारदस्य समाधिः न भग्नः । तद् दृष्ट्वा इन्द्रः भीतः । सः अचिन्तयत् — "देवर्षिः मम पदम् इच्छति ।" अत एव स कामदेवम् आदरपूर्वकम् आहूय सम्मानितवान् तत्कालं च नारदसकाशं प्रेषितवान् ।

कामदेवः तत्र गत्वा सर्वान् उपायान् प्रयुक्तवान् किन्तु मुनिः सर्वथा अस्पृष्टः अतिष्ठत् । तस्य कारणम् एतदेव यत् तस्मिन् स्थाने भगवान् शङ्करः कामदेवम् अदहत् । विलपन्ती रतिदेवीं शङ्करः अवदत् — "किञ्चित्कालानन्तरं कामदेवः जीविष्यति किन्तु इत. दृश्यमानपृथिव्यां तस्य शराः व्यर्थाः भविष्यन्ति ।" विफलमनोरथः कामदेवः स्वसहायकैः सह अमरावतीं प्रत्यावर्तत । तत्र स महर्षिनारदस्य सुशीलतायाः वर्णनम् अकरोत् । सः अवदत् — "नारदे कामक्रोधौ न स्तः यतो हि सः मां समीपम् आहूय मधुरवचनैः मम आतिथ्यम् अकरोत् ।" एतत् श्रुत्वा सर्वे आश्चर्यचकिताः ।

अथ देवर्षिनारदस्य तपस्या पूर्णा अभवत् । स भगवन्तं शङ्करम् उपगम्य स्ववृत्तम् अश्रावयत् । भगवान् शङ्करः अवदत् — "हे नारद ! मा कथय इदम् अन्यस्य सम्मुखे । भगवान् विष्णुरपि यदि पृच्छति तथापि तूष्णीं तिष्ठ ।" नारदाय इदं न अरोचत । स वीणां गृहीत्वा वैकुण्ठम् अगच्छत् । तत्रापि स स्वकामविजयस्य माहात्म्यं वर्णयामास । भगवान् अचिन्तयत् — "अस्य हृदये सकल-शोकदायकः अहङ्कारस्य मूलाङ्कुरः जायते । स झटिति एव उच्छिन्नः भवेत् ।" भगवान् प्रकटम् अवदत् — "महाराज ! भवान् ज्ञानवैराग्ययोः मूर्तरूपम् । कथं भवान् मोहग्रस्तः भवितुं शक्नोति !" नारदः सगर्वम् अवदत् — "प्रभो ! इदं सर्वं भवतः कृपामात्रम् ।"

विष्णुलोकात् नारदः यदा भूलोकम् आगच्छत्

# पञ्चतन्त्रम्

संस्कृतं भाषितं कर्तुं भारतीकविकीर्तितम् ।
पञ्चतन्त्र पुरा ख्यातं प्रस्तुमोऽक्लिष्टभाषया ॥

संस्कृतमेव भारतस्य सर्वसाधारणभाषा भवतु इति तमिऴ्देशीयः महाकविः सुब्रह्मण्य-भारतीमहोदयः अभिलषति स्म । तस्य मतेन यदि कोऽपि पञ्चतन्त्रम्[1] अर्थबोधपूर्वकं त्रिवारं कण्ठस्थ करोति तर्हि सः संस्कृतस्य अनर्गलभाषणे प्रावीण्यं प्राप्तुं शक्नोति ।[2] तस्य कविवरस्य वचने श्रद्दधाना वयं पञ्चतन्त्रस्य सरलसंस्करणम् अत्र प्रकाशयामः । मूलपाठगताः कठिनाः श्लोकाः, क्लिष्टप्रयोगाः, संस्कृतस्य व्यवहारदृष्ट्या अनावश्यक-विषयाः अत्र वारिताः । —सं०

### कथामुखम्

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र परमोदारः, सकलकलाकलापपारङ्गतः अमरशक्तिः नाम नृपतिः राज्यं करोति स्म । तस्य बहुशक्तिः, उग्रशक्तिः, अनन्तशक्तिः इति त्रयः पुत्राः आसन् । ते अतीव दुर्विनीताः अध्ययन-विमुखाश्च । एकदा राजा सचिवान् आहूय अवदत् —भोः ! ज्ञातम् एतत् भवद्भिः यत् मम एते पुत्राः शास्त्रविमुखाः विवेकरहिताश्च । तद् एतान् पश्यतः मम महद् अपि राज्यं सौख्यं न आवहति । साधु इदम् उच्यते —

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥[3]

अजातः, मृतः, मूर्खः —एषु मृतः अजातश्च सुतौ (पुत्रौ) वरम् (साधू) । यतः तौ स्वल्पदुःखाय (स्वल्पकालं दुःखं जनयतः) । जडः (मूर्खः) यावत्-जीवम् (आजीवनम्, सर्वदा) दहेत् (पीडयेत्, सन्तापयेत् अथवा पीडयति, सन्तापयति ।)

किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न भक्तिमान् ॥

या धेनुः (गौः) प्रसवं न करोति, दुग्धं न ददाति, या वन्ध्या, तया किं प्रयोजनम् ? एवमेव यः पुत्रः न विद्वान्, न भक्तिमान्, तस्य पुत्रस्य जन्मना कः लाभः ?

तद् एतेषां यथा बुद्धिप्रकाशः भवति तथा कोऽपि उपायः अनुष्ठीयताम् । अत्र मद्दत्तां वृत्तिं भुञ्जानाः पञ्चशतं पण्डिताः सन्ति । अतः यथा मम मनोरथाः सिध्यन्ति तथा अनुष्ठीयताम् । तत्रैकः प्रोवाच —"देव ! द्वादश वर्षाणि यावत् व्याकरणं श्रोतव्यम्, ततः धर्मशास्त्राणि, अर्थ-शास्त्राणि, कामशास्त्राणि । ततः तेषां प्रतिबोधनं सम्पादनीयम् ।" अथ तन्मध्यतः सुमतिर्नाम सचिवः

---

1. तन्त्रम्—नीतिसिद्धान्तसंवलितः अध्यायः । पञ्चानां तन्त्राणां समाहारः पञ्चतन्त्रम् ।
2. लोकसंस्कृतम्, षष्ठवर्षम्, चतुर्थाङ्कः, पृ. ३८
3. अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः । सकृद् दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥
अजात-मृत-मूर्खाणाम् आद्यौ वरं न च अन्तिमः । यतो हि आद्यौ (अजातमृतौ) सकृद् दुःखकरौ, अन्तिमः (मूर्खः) तु पदे पदे ।

प्राह — "स्वल्पकालस्थायि मानवजीवनम्, प्रभूत-कालज्ञेयानि शब्दशास्त्राणि । अतः सक्षेपमात्रं शास्त्र किञ्चित् एतेषा प्रबोधनार्थ चिन्त्यताम् ।" तथा हि उक्तम् —

अनन्तपार किल शब्दशास्त्र
स्वल्प तथायुर्बहवश्च विघ्ना ।
सारं ततो ग्राह्यमपास्य फल्गु
हसैर्यथा क्षीरमिवाम्बुमध्यात् ।।

शब्दशास्त्र किल (खलु) अनन्तपारम् (अनन्तम् अपारं च) तथा आयुः स्वल्पं विघ्ना च बहव । तत. फल्गु (असारम्) अपास्य (वर्जयित्वा) सार [तथा] ग्राह्यम् (ग्रहणीयम्) यथा अम्बुमध्यात् (नीरक्षीरमध्यात्) हसैः क्षीरम् (दुग्धम्) [एव गृह्यते] ।

"तद् अत्रास्ति विष्णुशर्मा नाम ब्राह्मण सकलशास्त्रपारङ्गमः, छात्रसंसदि लब्धकीर्तिः । तस्मै समर्पयतु एतान् । स नून द्राक् प्रबुद्धान् करिष्यति एतान् ।" स राजा तद् आकर्ण्य विष्णुशर्माणम् आहूय प्रोवाच — "भो भगवन् ! एते अनधिगत-शास्त्रा. मम पुत्राः द्राक् यथा शास्त्रनिपुणा. भवन्ति तथा करोतु । अहं भवते पारितोषिकरूपेण ग्रामशतं ददामि ।" अथ विष्णुशर्मा तं राजानम् अवदत् — "देव ! श्रूयता मे तथ्यवचनम् । नाहं विद्याविक्रय ग्रामशतेनापि करोमि । पुन एतान् तव पुत्रान् मासषट्केन यदि नीतिशास्त्रज्ञान् न करोमि तर्हि स्वनामत्यागं करिष्ये ।"

अथ स राजा ब्राह्मणस्य ताम् असम्भाव्या प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टः, विस्मयान्वित तस्मै सादरं तान् कुमारान् समर्प्य परां निर्वृतिम् आसादयामास । विष्णुशर्मणा अपि तान् आदाय तदर्थं मित्रभेद, मित्रसम्प्राप्ति, काकोलूकीयम्, लब्धप्रणाशः, अपरीक्षितकारक चेति पञ्च तन्त्राणि रचयित्वा पाठिता ते राजपुत्राः । तेऽपि तान् अधीत्य मासषट्केन यथोक्ता. सवृत्ताः । तत प्रभृति एतत् पञ्चतन्त्रक नाम नीतिशास्त्र बालावबोधनार्थं भूतले प्रवृत्तम् । कि बहुना —

अधीते य इद नित्य नीतिशास्त्र शृणोति च ।
न पराभवमाप्नोति शक्रादपि कदाचन ।।

इति कथामुखम् ।

परमोदारः — अतीव उदार, दानशील । सकलकलापारङ्गत. — चतु षष्टिकलासु निपुण । नृपतिः — राजा । दुर्विनीत. — उच्छृङ्खल·, अभद्र । तद् — तस्मात्, ततः । उच्यते — कथ्यते । तत — तस्मात्, तत्परम् । बुद्धिप्रकाश· — ज्ञानविकास· । भुञ्जाना· — भोग कुर्वाणाः । अनुष्ठीयताम् — क्रियताम् । प्रोवाच — अवदत् । प्रतिबोधनम् — बोधः । प्राह — अकथयत् । उक्तम् — कथितम् । द्राक् — शीघ्रम् । प्रबुद्धान् — बोधयुक्तान्, ज्ञानिन. । आकर्ण्य — श्रुत्वा । पारितोषिकरूपेण — पुरस्काररूपेण । तथ्यवचनम् — सत्यवचनम् । निर्वृतिम् आसादयामास — शान्ति प्राप्नोत् । आदाय — गृहीत्वा । अधीत्य — पठित्वा । यथोक्ताः संवृत्ता — कथनानुरूपा, शास्त्रनिपुणाः सञ्जाता । बालावबोधनार्थम् — बालानाम् अवबोधनार्थम् (शिक्षणार्थम्) । पराभव — पराजय. । शक्र· — इन्द्र । प्रवृत्तम् — प्रथितम्, प्रचलितम् ।

---

# पितृभक्तिः

अस्ति चन्द्रपुर नाम नगरम् । तत्र विक्रमसेनो नाम राजा आसीत् । तस्मिन् नगरे हरिदत्तनामा श्रेष्ठी । तस्य भार्या श्रृङ्गारसुन्दरी नाम । तत्पुत्रः मदनविनोदः । तस्य पत्नी पद्मावती । सा सोमदत्तश्रेष्ठिन. कन्या ।

मदनविनोद नितान्तं विषयासक्त कुपुत्रः पितु शिक्षा न श्रृणोति । तस्य द्यूत-मद्य-मृगयादिषु अतीव आसक्ति. । कुमार्गचारिणं त कुपुत्र दृष्ट्वा तत्तात हरिदत्त भृश दु खितः ।

त हरिदत्त कुपुत्रदु खेन पीडितं विमृश्य त्रिविक्रमो नाम तस्य सखा कश्चन द्विजः स्वगृहात् नीतिनिपुणम् एक शुकं तम् उपनीय अवदत्— 'सखे हरिदत्त ! त्वमेनं शुकं पुत्रवत् परिपालय । एतस्य पालनेन तव दु खं दूरीभविष्यति ।'

हरिदत्त त शुकं गृहीत्वा पुत्राय समार्पयत् । मदनविनोदेन स स्वर्णपिञ्जरे स्थापितः परिपोषितश्च ।

अथैकदा रहसि शुक. मदनम् अवदत्— हे सखे !

पित्रोस्ते दु खिनोर्दु.खात् पतत्यश्रुचयो यदि ।
तेन पापेन ते वत्स पतनं देवशर्मवत् ॥

हे वत्स ! यदि दुःखिनोः तव पित्रो दु खात् अश्रुचयः पतति तर्हि तेन पापेन तव पतनं देवशर्मवत् भवेत् ।

मदनविनोदः अपृच्छत्—कथम् एतत् ?

शुकः कथयति । अस्ति पञ्चपुरं नाम नगरम् । तत्र सत्यशर्मा नाम ब्राह्मणः । तद्भार्या धर्मशीलानाम्नी । पुत्रस्तु देवशर्मा । सः अधीतविद्य. पित्रो. प्रच्छन्नतया देशान्तरं गत्वा भागीरथीतीरे तपः कृतवान् ।

एकदा स तपस्वी गङ्गातीरे जपार्थम् उपविष्टः आसीत् । तस्मिन् काले कयाचन बलाकया उड्डीयमानया तदङ्के पुरीषोत्सर्ग कृतः । तेन क्रुद्ध. तपस्वी यावत् ऊर्ध्वम् अपश्यत् तावत् क्रोधाग्निना भस्मीभूता बलाका भूमौ अपतत् । तद् दृष्ट्वा दुःखितमनाः स नारायणद्विजगृहं भिक्षार्थम् अगच्छत् । तत्र स्वामिसेवा कुर्वत्याः ब्राह्मण्याः भिक्षादाने विलम्बम् आलक्ष्य देवशर्मा पुन कुपितः । तदा ब्राह्मणी ताम् अवदत्—'नाह बलाकेव तव कोपास्पदम् ।' एतत् श्रुत्वा मदनविनोदः भीतः विस्मितश्च ।

अथ तया प्रेषितः स धर्मव्याधपार्श्वं वाराणसीम् अगच्छत् । तत्र रक्ताक्तहस्तम्, यमप्रतिमम्, मांस-विक्रयं विदधानं तं विलोक्य तत्पुरतः स्थितः । व्याधेन स्वागतप्रश्नपूर्वं स्वगृह नीत्वा, सभक्तिकं निजपितरौ भोजयित्वा पश्चात् तस्मै भोजनं दत्तम् । ततः स व्याधं ज्ञानकारणम् अपृच्छत्—कथं सती ज्ञातवती कथ च त्वं ज्ञातवान् इति ।

व्याधेन उक्तम्—मम तस्याश्च ज्ञाने पितृभर्तृशुश्रूषणम् एव कारणम् । निजपितरौ परित्यज्य भ्रमन् त्व मादृशां न सम्भाषणार्हः, परम् अतिथिं मत्वा जल्पितः ।

एवम् उक्तः स ब्राह्मणो विनयपरं व्याधं 'कुतोऽहम् असम्भाष्य.' इति अपृच्छत् ।

तेन उक्तम्—

न पूजयन्ति ये पूज्यान् मान्यान् न मानयन्ति ये ।
जीवन्ति निन्द्यमानास्ते मृताः स्वर्गं न यान्ति च ॥

अथ व्याधेन बोधितः स निजगृहं प्रत्यगच्छत् ।

तत्र स पित्रोः शुश्रूषणेन इह कीर्तिमान् अभवत् परतश्च कीर्तिभाजनम् । तस्मात् त्व स्वकुलोद्भव वणिग्धर्मं स्मर पित्रोश्च विनयपर. भव ।

[इयं कथा 'संस्कृतप्रवेशः' इति पुस्तके वर्तते । तत्र इयं 'शुकसप्तति' इतिनामक-पुस्तकात् उद्धृता इति उल्लिखितम् । भाषादृष्ट्या किञ्चित् परिवर्त्य अत्र अस्माभि इयं प्रकाशिता । –स०]

श्रेष्ठी—महाधनिक । तत्तात —तस्य पिता । विमृश्य—चिन्तयित्वा, विचार्य । तम् उपनीय—तस्य पार्श्वं नीत्वा । रहसि — एकान्ते । पित्रो. प्रच्छन्नतया — पितरं मातरं च अकथयित्वा गुप्तरूपेण । वलाका — बकजातीया लघुपक्षिणी । पुरीषोत्सर्ग. — मलत्याग । यमप्रतिमम् — यमसदृशम् । विदधानम् — कुर्वन्तम् । विलोक्य — दृष्ट्वा । असम्भाष्य — सम्भाषणार्थम् अयोग्य । इह — इहलोके । परतश्च — परलोके च । विनयपर — विनयपरायण, विनयी ।

## महामाये

महामाये ! को नु भणतु महिमानम् !
अभय वितरसि करकमलाभ्यां
नयनाभ्यां वरदानम् !!

वदन शशी दृशौ मार्तण्ड
दिग्वलय परिधानम् !!
क्रोधोऽग्निः स्मितमपि नवकुसुमं
करुणा खगकुलगानम् !!

पदजलमुदधिरासनं धरणी
गगनं नीलवितानम् !!
विनतजनानां हरसि विपत्तिं
दृप्तानामभिमानम् !!

यमपि निजीकुरुषे करुणामयि
त विदधासि वदान्यम् !!
त्वमसि जननि ! धनजनसुखदात्री
निखिलसमृद्धिनिधानम् !

पालय पोषय ह्रासय वर्धय
प्रेरय काव्यललामम् !!

—अभिराज डॉ. राजेन्द्रमिश्र

---

# गीतायाः भूमिका

## मृत्योः असत्यता

अर्जुनस्य वचन श्रुत्वा श्रीकृष्णस्य मुखे हास्यभाव· प्राकाशत, तद् हास्य रङ्गमयं प्रसन्नतापूर्णं च । अर्जुनस्य भ्रमे मानवजातेः पुरातनभ्रमम् अभिज्ञाय अन्तर्यामी अहसत् — स भ्रम श्रीकृष्णस्य मायाप्रसूत । जगति अशुभम्, दु ख दुर्बलता च भोगसयमाभ्यां नाशयितु स मानव मायावशम् अकरोत् । प्राणस्य ममता, मरणस्य भयम्, सुखदु.खयोः अधीनत्वम्, प्रियाप्रियबोध· इत्यादि अज्ञानम् अर्जुनस्य वचने प्रकाशितम् । एतत् मानवबुद्धे· दूरीकृत्य जगत् अशुभात् मोचनीयम् । तस्य शुभकार्यस्य अनुकूलाम् अवस्था स्रष्टु श्रीकृष्ण अवातरत्, गीतां प्रकाशयितुं प्रवृत्त । किन्तु प्रथमम् अर्जुनस्य मनसि यः भ्रमः उत्पन्न. स भोगेन नाशयितव्यः । अर्जुन. श्रीकृष्णस्य सखा, मानवजातेः प्रतिनिधि·, तस्मै गीता प्रकाशयितव्या; स श्रेष्ठपात्रम् । किन्तु मानवजाति. अधुनापि गीतायाः अर्थं ग्रहीतु न योग्या, अर्जुनोऽपि सम्पूर्णम् अर्थं ग्रहीतु न पारितवान् । यः शोकः, यत् दु खम्, यत् कातरत्व तस्य मनसि उत्पन्नम्, तस्य सम्पूर्णभोगं मानवजातिः कलियुगे कुर्वती आस्ते । ख्रिस्तधर्म. प्रेम्ण·, बौद्धधर्मः दयायाः, इस्लाम्धर्मः शक्तेः प्रवर्तनेन तं दुःखभोगं लघूकृतवन्तः । अद्य कलियुगान्तर्गतस्य सत्ययुगस्य प्रथमखण्डस्य आरम्भः भविष्यति । भगवान् पुनः भारताय, कुरुजातेः वंशधरगणाय गीतां प्रदत्तवान् । यदि ते ग्रहीतु धारयितु च समर्थाः भवेयुः तर्हि भारतस्य जगतश्च मङ्गल सुनिश्चितम् ।

श्रीकृष्णः अवदत् — अर्जुन, त्वं पण्डितवत् पापपुण्यविचारं करोषि, जीवनमरणतत्त्वं व्याख्यासि, जातेः कल्याणम् अकल्याणं च कथं भवति इति प्रतिपादयितु चेष्टसे । किन्तु यथार्थज्ञानस्य परिचयः तव वचने न प्राप्यते, अपि तु तव प्रत्येक वचन घोराऽज्ञानतापूर्णम् । स्पष्टं वद — मम हृदय दुर्बलम्, शोककातरम्, बुद्धिः कर्तव्यपराङ्मुखी । ज्ञानिनः भाषया अज्ञवत् तर्कं कृत्वा स्वदुर्बलतायाः समर्थनं निष्प्रयोजनम् । शोक. मनुष्यमात्रस्य हृदये उत्पद्यते, मनुष्यमात्रस्य मरणं विच्छेदश्च अतीव भयङ्कर, जीवन महामूल्यम्, शोकः असह्य कर्तव्यं च कठोरम् । प्रत्येक मनुष्यः स्वार्थसिद्धि मधुरां मत्वा हर्षं करोति, दु खं करोति, हसति, क्रन्दति, किन्तु एताः वृत्तय. ज्ञानप्रसूता· इति कोऽपि न वदति । येषामर्थे शोकः नावश्यक·, तेषामर्थे त्व शोकं करोषि । ज्ञानी कस्याप्यर्थे शोक न करोति — न मृतस्य अर्थे, न जीवितस्य अर्थे । स एतत् जानाति — मरण नास्ति, विच्छेदः नास्ति, दु ख नास्ति; वयम् अमराः, वयं चिरकालम् एकत्वापन्नाः, वयम् आनन्दस्य पुत्रा·, अमृतस्य पुत्राः; अस्या पृथिव्यां जीवनमरणाभ्या सह, सुखदु खाभ्या सह चोरलुक्किकाखेलां कर्तुम् आगताः, वय प्रकृतेः विशालनाट्यगृहे हासक्रन्दनयोः अभिनयं कुर्मः, शत्रोः मित्रस्य च वेशं धारयित्वा युद्धस्य शान्तेश्च, प्रेम्णः कलहस्य च रसम् आस्वादयामः । वय स्वल्पकालजीविनः, श्वः परश्वः वा देहत्यागं कृत्वा कुत्र गमिष्यामः इति न जानीमः । अस्माकम् अस्तित्वम् अनन्तक्रीडायां मुहूर्तमात्रम्, क्षणिकखेला, कतिचित्क्षणानां भावः । वयम् आस्म, वयं स्मः, वयं भविष्यामः — वयं सनातनाः, नित्याः, अनश्वराः । वयं प्रकृतेः ईश्वराः, जीवनमरणयोः कर्तारः भगवतः अशाः, भूत-भवद्-भविष्यताम्

अधिकारिणः । यथा देहे बाल्यम्, यौवनम्, जरा तथैव देहान्तरप्राप्तिः । मरण नाममात्रम्, नाम श्रुत्वा अस्माकं भय भवति, वयं दु खिताः भवामः । यदि तथ्यम् अवगतं स्यात् तर्हि भयं न भवेत् वयं च दु खिताः न भवेम । यदि वयं बालकस्य यौवनप्राप्ति मरणं मत्वा क्रन्दन्त· वदेम, आहा, मम स प्रियबालकः कुत्र गतः, एष युवकः स बालक. नास्ति, कुत्र मम स स्वर्णचन्द्र . तर्हि सर्वे अस्माकं व्यवहार हास्यकरं घोराऽज्ञानप्रसूत वदेयु·; यतो हि, एषा अवस्थान्तरप्राप्तिः प्रकृतेः नियम , बालकदेहे युवकदेहे च एक एव पुरुषः बाह्यपरिवर्तनम् अतीतः स्थिरभावेन तिष्ठति । साधारणजनस्य मरणे भयं दु खं च दृष्ट्वा तस्य व्यवहारः तद्वदेव हास्यकरः, घोराऽज्ञानप्रसूतः इति ज्ञानी मन्यते, यतो हि देहान्तरप्रान्ति. प्रकृतेः नियमः । स्थूलदेहे सूक्ष्मदेहे च एक एव पुरुषः बाह्यपरिवर्तनम् अतीतः स्थिरभावेन तिष्ठति । वयम् अमृतस्य पुत्राः, कः म्रियते, क. मारयति, मृत्यु· अस्मान् स्पर्ष्टुं न शक्नोति, — मृत्युः निःसारध्वनिमात्रम्, मृत्युः भ्रमः, मृत्यु नास्ति ।

**मात्रा**

पुरुषः अचलः, प्रकृतिः चलनशीला। चलनशील-प्रकृतौ पुरुषः अवस्थितः । प्रकृतिस्थ. पुरुषः पञ्चेन्द्रियैः यत् पश्यति, यत् शृणोति, यत् जिघ्रति, आस्वादयति, स्पृशति तस्य भोगार्थ स प्रकृतिम् आश्रयते । वय रूप पश्यामः, शब्द शृण्मः, गन्धं जिघ्रामः, रसम् आस्वादयामः, स्पर्शम् अनुभवामः । शब्दः, स्पर्शः, रूपम्, रसः, गन्ध — एतानि पञ्च तन्मात्राणि इन्द्रियभोगस्य विषया. । षष्ठेन्द्रियस्य मनस· विशेषविषयः सस्कारः । बुद्धेः विषयः चिन्तनम्। पञ्च तन्मात्राणि, संस्कारं चिन्तनं च अनुभवितुं भोक्तुं च पुरुषप्रकृत्योः परस्परसम्भोगः अनन्तक्रीडा च । एष भोगः द्विविधः, शुद्धः अशुद्धश्च । शुद्धभोगे सुखदु खे न स्तः, पुरुषस्य चिरन्तनः, स्वभावसिद्ध· धर्म· आनन्द एव तिष्ठति। अशुद्धभोगे सुखदु खे स्त , शीतोष्णे, क्षुत्पिपासे, हर्षशोकौ इत्यादीनि द्वन्द्वानि अशुद्धभोगिनं विचलितं विक्षुब्धं च कुर्वन्ति । कामना अशुद्धताया कारणम्, कामिमात्र. अशुद्ध , यः निष्कामः स शुद्धः । कामनया राग. द्वेषश्च उत्पद्येते, रागद्वेषवशीभूत. पुरुषः विषयेषु आसक्तः भवति । आसक्ते. फल बन्धनम्। पुरुषः विचलितः, विक्षुब्ध , किं बहुना, व्यथित., यन्त्रणाक्लिष्ट· सन्नपि आसक्तेः अभ्यासदोषात् स्वस्य क्षोभस्य, व्यथाया· यन्त्रणायाः वा कारणं परिहर्तुं न शक्नोति ।

**समभावः**

श्रीकृष्णः प्रथमम् आत्मनः नित्यतां वर्णयित्वा परम् अज्ञानबन्धनस्य शिथिलीकरणोपायं प्रदर्शितवान् । मात्रा. अर्थात् विषयस्य नानाविधाः स्पर्शा., सुखम्, दुःखम् इत्यादीनि द्वन्द्वकारणानि । एते स्पर्शा. अनित्याः, तेषाम् आरम्भोऽस्ति, अन्तोऽप्यस्ति । एते अनित्याः इति हेतोः आसक्तिः त्यक्तव्या । यदि कश्चित् अनित्यवस्तुनि आसक्तः भवति, तस्य आगमने हृष्टः, नाशे अभावे वा दु खितः व्यथितश्च भवति, सा अवस्था अज्ञानं कथ्यते । अज्ञानेन अनश्वरस्य आत्मनः सनातनभावः सततानन्दश्च आच्छन्न· भवति, वयं केवलं क्षणस्थायिना भावेन वस्तुना च मत्ताः तिष्ठामः, तस्य नाशजनितदुःखेन शोकसागरे निमग्नाः भवाम. । इत्थम् अभिभूत. न सन् यः विषयस्य स्पर्शान् सोढुं शक्नोति यद्वा यः द्वन्द्वानि अनुभूयापि सुखदु खयो., शीतोष्णयोः, प्रियाप्रिययोः, मङ्गलामङ्गलयोः, सिद्ध्यसिद्ध्यो. हर्षशोकौ न अनुभूय समभावेन, प्रफुल्लचित्तेन, हास्यमुखेन तानि ग्रहीतुं शक्नोति, स

पुरुष. रागद्वेषाभ्यां विमुक्त. भवति, अज्ञानस्य बन्धनं छित्त्वा सनातनं भावम् आनन्द च अनुभवितु शक्नोति — अमृतत्वाय कल्पते ।

### समतायाः गुणः

समता गीतायाः प्रथमशिक्षा । समता एव गीतोक्त-साधनायाः प्रतिष्ठा । ग्रीस्निवासी स्टोइक्सम्प्रदाय· भारतात् इमा समतायाः शिक्षां लब्ध्वा यूरोपे समतावादस्य प्रचार कृतवान् । ग्रीक्दार्शनिकः एपिकुरस् श्रीकृष्ण-प्रचारित-शिक्षाया अन्यदिशाम् आश्रित्य शान्तभोगस्य शिक्षाम्, Epicureanism अथवा भोगवादं प्रचारितवान् । समतावादः, भोगवादः इति एतत् मतद्वयं प्राचीनयूरोपे श्रेष्ठनैतिकमतम् इति मन्यते स्म, आधुनिके यूरोपेऽपि तत् नवरूप धृत्वा Puritanism, Paganism इति चिरद्वन्द्वस्य सृष्टिम् अकरोत् । किन्तु गीतोक्तसाधनायां समतावाद., शान्त शुद्ध· वा भोगः समानः एव । समता कारणम्, शुद्धभोगः कार्यम् । समतया आसक्तिः नश्यति, रागद्वेषौ प्रशाम्यत· । आसक्ते. नाशेन, रागद्वेषयो. प्रशमनेन शुद्धता जायते । शुद्धपुरुषस्य भोगः कामनाशून्यः, आसक्तिरहितः, अत एव च शुद्धः । एष तावत् समतायाः गुणः यत् समतया सह आसक्तिः रागद्वेषौ च एकस्मिन् आधारे स्थातु न शक्नुवन्ति । समता हि शुद्धे बीजम् ।

### दु·खजयः

ग्रीस्देशस्य स्टोइक्सम्प्रदायस्य जनाः दुःख-जयस्य यथार्थम् उपायं न अवगतवन्तः । एष तेषां प्रमादः आसीत् । ते दु ख निगृह्य, निगृह्य, दमयित्वा दु·खजयस्य चेष्टां कृतवन्तः । किन्तु गीतायाम् अन्यत्र वर्णितम् — प्रकृतिं यान्ति भूतानि निग्रह कि करिष्यति ? प्राणिनः स्वस्वप्रकृतिम् अनुसरन्ति, निग्रहेण कि प्रयोजनम् ? दु खनिग्रहेण मानवस्य हृदय शुष्कम्, कठोरम्, प्रेमशून्य भवति । दु खेन अश्रुपात न करिष्यामि, यन्त्रणाबोध न स्वीकरिष्यामि, "एतत् किमपि नास्ति" इति मत्वा नीरव सहिष्ये, पत्न्या दु खम्, सन्तानस्य दु खम्, बन्धोः दु.खम्, जातेः दु खम् अविचलितचित्तेन द्रक्ष्यामि—एष भाव· बलदृप्तस्य असुरस्य तपस्या । तस्य महत्त्वम् अस्ति, मानवस्य उन्नतिसाधने आवश्यकतापि अस्ति, किन्तु एष दु खजयस्य यथार्थः उपाय. नास्ति, अन्तिमा चरमा वा शिक्षा नास्ति । दुःखजयस्य यथार्थ· उपायः ज्ञानम्, शान्ति., समता । शान्तभावेन सुखदु खयो· ग्रहणम् एव यथार्थः पन्थाः । प्राणे सुखदु खयो· सञ्चार· न धारयितव्यः, बुद्धि. अविचलिता स्थापनीया । समतायाः स्थानं बुद्धिः, न चित्तं न वा प्राण· । बुद्धेः समतायां चित्तं प्राणश्च स्वतः समतायुक्ते भवत·, अथ च प्रेम इत्यादय. प्रकृतिजाता· प्रवृत्तयः न शुष्यन्ति, मनुष्यः प्रस्तरः न भवति, जड., निष्प्राणः न भवति । प्रकृतिं यान्ति भूतानि— प्रेम इत्यादय. प्रकृतेः चिरन्तनप्रवृत्तयः, ताभ्य. परित्राणस्य एक एव उपायः परब्रह्मणि लयः । प्रकृतौ स्थित्वा प्रकृतिवर्जनम् असम्भवम् । यदि कोमलतां परित्यजेम तर्हि कठोरता हृदयम् अभिभविष्यति, — बाह्यतः दु खस्य स्पन्दनं निषेध्रामः चेत् दु खम् अन्तरे राशीभूय स्थास्यति अलक्षितरूपेण च प्राणं शोषयिष्यति । ईदृशि कृच्छ्रसाधनायाम् उन्नतेः सम्भावना नास्ति । तपस्यया शक्ति जायते नाम । किन्तु अस्मिन् जन्मनि यत् निगूहितं तत् परजन्मनि सर्वान् रोधान् भङ्क्त्वा द्विगुणवेगेन उद्भविष्यति ।

(श्रीअरविन्दस्य 'मूलबङ्गलारचनावलि'तः अनूदित. अयं विषय. । –स०)

# केनोपनिषद्

(पूर्वतोऽनुवृत्ता)

## द्वितीयः खण्डः

यदि मन्यसे सुवेदेति दभ्रमेवापि
नूनं त्व वेत्थ ब्रह्मणो रूपम् ।
यदस्य त्वं यदस्य देवेष्वथ नु
मीमांस्यमेव ते मन्ये विदितम् ॥१॥

(यदि [ब्रह्म] सुवेद इति मन्यसे) यदि त्वं मन्यसे यद् अह ब्रह्म सम्यग् जानामि, तर्हि (त्वं नूनं ब्रह्मणः रूप दभ्रम् एव अपि वेत्थ) सत्यमेव त्वं तस्य रूपम् अत्यल्पं जानासि। (अस्य यत् त्वम्) तस्य तद् रूपं यत् त्वमसि, (अस्य यद् देवेषु) तस्य तद् रूपं यद् देवानामस्ति, (अथ नु ते मीमांस्यम् एव) तस्य त्वया मीमांसा कर्तव्या । (मन्ये विदितम्) अधुना अह तद् ज्ञात मन्ये ।

यदि त्व मन्यसे यद् अह ब्रह्म सम्यग् जानामि तर्हि सत्यमेव त्वं तस्य रूपम् अत्यल्पं जानासि। तस्य तद् रूपं यत् त्वमसि, तस्य तद् रूपं यद् देवानामस्ति, तस्य त्वया मीमांसा कर्तव्या ।

मीमांसा कृत्वा शिष्यः ब्रवीति — अधुना अहं तद् ज्ञात मन्ये ।

नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥२॥

(सुवेद इति अहं न मन्ये) अहम् एतद् न मन्ये यदहं तत् सम्यग् जानामि (नो न वेद इति वेद च) तथापि अहं जानामि यत् तद् मम अज्ञातं नास्ति। (नः यः तद् वेद) अस्मासु यः इद जानाति स (तद् वेद) तद् ब्रह्म जानाति। (नो न वेद इति वेद च) स जानाति यत् तद् ब्रह्म तस्य अज्ञातं नास्ति ।

अहम् एतद् न मन्ये यद् अह तद् ब्रह्म सम्यग् जानामि। तथापि अहं जानामि यत् तद् मम अज्ञातं नास्ति। अस्मासु य इदं जानाति स तद् ब्रह्म जानाति। स जानाति यत् तद् ब्रह्म तस्य अज्ञातं नास्ति ।

यस्यामत तस्य मतं मत यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥३॥

(यस्य अमतम्) यस्य तद् ब्रह्म चिन्तनक्रियया गृहीतं न अभवत् (तस्य मतम्) स तद् जानाति। (यस्य मतम्) यस्य तत् चिन्तनक्रियया गृहीतम् अभवत् (स न वेद) स तद् न जानाति। (विजानताम् अविज्ञातम्) ये तस्य विवेचनं कुर्वन्ति तेषां विवेचनस्य तद् अविज्ञातम्, (अविजानताम्) ये तस्य विवेचनार्थं न यतन्ते तेषा (विज्ञातम्) तद् विज्ञातम् ।

यो ब्रवीति यत् तद् ब्रह्म मम चिन्तनेन गृहीत न अभवत्, स तद् जानाति। य कथयति यद् ब्रह्म मम चिन्तनेन गृहीतम् अभूत्, स तद् न जानाति। ये तस्य विवेचनं कुर्वन्ति तेषा विवेचनस्य तद् अविज्ञातम्, ये तस्य विवेचनार्थं न यतन्ते तेषां तद् विज्ञातम् ।

प्रतिबोधविदितं मतममृतत्व हि विन्दते ।
आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥४॥

(प्रतिबोधविदितम्) यदा तत् प्रतिबिम्बक-बोधेन मनुष्यस्य ज्ञातं भवति तदा तस्य (मतम्) विचारात्मकं ब्रह्मज्ञानं प्राप्तं भवति, (अमृतत्वं हि विन्दते) यतो हि सः अमृतत्वम् अधिगच्छति। (आत्मना वीर्यं विन्दते) आत्मना मनुष्यः उपलब्धये

सामर्थ्यं लभते, (विद्यया अमृत विन्दते) ज्ञानेन स अमरताम् अधिगच्छति ।

यदा तत् प्रतिबिम्बकबोधेन मनुष्यस्य ज्ञातं भवति तदा तस्य विचारात्मकं ब्रह्मज्ञान प्राप्तं भवति, यतो हि सोऽमृतत्वम् अधिगच्छति । आत्मना मनुष्य· उपलब्धये सामर्थ्यं लभते, ज्ञानेन सः अमरताम् अधिगच्छति ।

इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महती विनष्टिः ।
भूतेषु भूतेषु विचित्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥५॥

(इह चेद् अवेदीत्) यदि मनुष्यः अत्र तद् ज्ञानं प्राप्नोति (अथ सत्यम् अस्ति) तदा तु स वस्तुतः अस्तित्वयुक्त·; (इह चेद् न अवेदीत्) यदि सः अत्र ज्ञानं प्राप्तु न शक्नोति तर्हि (महती विनष्टिः) तस्य महान् विनाशोऽस्ति । (धीरा· भूतेषु भूतेषु विचित्य) ज्ञानिनः भूतमात्रे विवेकेन तद् ब्रह्म जानन्ति, (अस्मात् लोकात् प्रेत्य) ते अस्मात् लोकात् प्रयाण कृत्वा (अमृताः भवन्ति) अमरा जायन्ते ।

यदि मनुष्यः अत्र तद् ज्ञानं प्राप्नोति तदा तु स सत्यमेव सत्स्वरूपः; यदि सः अत्र ज्ञानं प्राप्तुं न शक्नोति तर्हि तस्य महान् विनाशः । ज्ञानिनः भूतमात्रे विवेकेन तद् ब्रह्म जानन्ति । ते अस्मात् लोकात् प्रयाणं कृत्वा अमरा जायन्ते ।

### तृतीयः खण्डः

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥१॥

(ब्रह्म ह देवेभ्यः विजिग्ये) ब्रह्म देवेभ्यः विजयं प्राप्नोत् । (तस्य ह ब्रह्मण· विजये देवा. अमहीयन्त) ब्रह्मणः तस्मिन् विजये देवा महिमान्विता अभवन् । (ते ऐक्षन्त अस्माकम् एव अय विजय अस्माकम् एव अयं महिमा इति) ते अपश्यन् — "अयम् अस्माकम् एव विजय., अयम् अस्माकम् एव महिमा ।"

ब्रह्म देवेभ्यः विजयं प्राप्नोत् । ब्रह्मणः तस्मिन् विजये देवा महिमान्विता अभवन् । ते अपश्यन्— अयम् अस्माकम् एव विजयः, अयम् अस्माकम् एव महिमा इति ।

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिति ॥२॥

(तद् ह एषां विजज्ञौ) तेषाम् अय विचार. तस्य ब्रह्मणः ज्ञातोऽभवत्; (तेभ्य. ह प्रादुर्बभूव) तत् तेषां समक्ष प्रकटमभवत् । (किम् इदं यक्षम् इति तद् न व्यजानत) ते ज्ञातुं न अशक्नुवन् यत् किम् इदं यक्षम्, कोऽय शक्तिशाली देव इति ।

तेषाम् अयं विचार. तस्य ब्रह्मण ज्ञातोऽभवत् । तत् तेषा समक्षं प्रकटम् अभवत् । ते ज्ञातु न अशक्नुवन् यत् किम् इदं यक्षम्, कोऽयं शक्तिशाली देव इति ।

तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥३॥

(ते अग्निम्) (अब्रुवन्) अवदन्, (जातवेदः एतद् विजानीहि) "हे जातवेदः ! सर्वेषाम् उत्पन्नपदार्थानां ज्ञातः ! अस्य ज्ञान प्राप्नुहि, (किम् एतद् यक्षम् इति) कोऽयं शक्तिशाली देवः" इति ? सोऽब्रवीत् — (तथा इति) "तथास्तु" इति ।

ते अग्निम् अवदन् — "हे जातवेदः, सर्वेषाम् उत्पन्नपदार्थानां ज्ञातः ! अस्य ज्ञान प्राप्नुहि,

कोऽयं शक्तिशाली देवः" इति । सोऽब्रवीत्— "तथास्तु" इति ।

तदभ्यद्रवत् तमभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥४॥

(तद् अभ्यद्रवत्) अग्निः तत् प्रति तीव्रवेगेन अगच्छत्; (तम् अभ्यवदत्—कः असि इति) ब्रह्म तम् अपृच्छत्—"त्वं कोऽसि ?" (अहं वै अग्निः अस्मि इति अब्रवीत्) सः अब्रवीत्— अहं अग्निरस्मि, (अहं वै जातवेदाः अस्मि इति) अहं सर्वेषामपि उत्पन्नपदार्थानां ज्ञाता ।

अग्नि. तत् प्रति तीव्रवेगेन अगच्छत् । ब्रह्म तम् अपृच्छत्—"त्वं कोऽसि ?" सः अब्रवीत्— अहम् अग्निरस्मि, अहं सर्वेषामपि उत्पन्नपदार्थानां ज्ञाता ।

तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति ॥५॥

(तस्मिन् त्वयि किं वीर्यम् इति) "ईदृशे त्वयि का शक्तिः ?" (इदं सर्वम् अपि दहेयम्) इदं सर्वमपि अहं दग्धुं शक्नोमि— (यद् इदं पृथिव्याम् इति) इदं सर्वमपि यद् अस्मिन् भूतलेऽस्ति ।

"ईदृशे त्वयि का शक्तिः ?" "इदं सर्वमपि अहं दग्धुं शक्नोमि यद् अस्मिन् भूतलेऽस्ति ।"

तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥६॥

(तस्मै तृणं निदधौ एतद् दह इति) ब्रह्म तस्य सम्मुखं तृणम् अस्थापयत् [अवदच्च]— "एतद् ज्वालय" । (सर्वजवेन तद् उपप्रेयाय) सः तत् प्रति पूर्णवेगेन अगच्छत् [किन्तु] (तद् दग्धु न शशाक) स तद् ज्वालयितु न अशकत् । (सः ततः एव निववृते) स तत्र एव विरतः, तत एव निवृत्तश्च । (एतद् विज्ञातु न अशकम् यद् एतद् यक्षम् इति) "अहं ज्ञातुं न अशकम् यत् कोऽयं शक्तिशाली देवः इति ।"

ब्रह्म तस्य सम्मुखं तृणम् अस्थापयत् अवदच्च — "एतद् ज्वालय" । सः तत् प्रति पूर्णवेगेन अगच्छत् किन्तु तद् ज्वालयितुं न अशकत् । स तत्र एव विरतः ततः प्रतिनिवृत्तश्च । सः अवदत्— अहं ज्ञातुं न अशकं यत् कोऽयं शक्तिशाली देवः इति ।

अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद् यक्षमिति तथेति ॥७॥

(अथ वायुम् अब्रुवन्) तदा ते वायुमवदन्, (वायो एतद् विजानीहि किम् एतद् यक्षम् इति) "हे वायो ! किम् इदं शक्तिशालि यक्षम् इति ज्ञानं प्राप्नुहि ।" सः अब्रवीत्—(तथा इति) "तथास्तु" इति ।

तदा ते वायुमवदन्—हे वायो ! किम् इदं शक्तिशालि यक्षम् इति ज्ञानं प्राप्नुहि । सोऽब्रवीत् —तथास्तु इति ।

तदभ्यद्रवत्तमभ्यवदत् कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥८॥

(तद् अभ्यद्रवत्) स तत् प्रति तीव्रवेगेन अगच्छत् । (तम् अभ्यवदत् कः असि इति) तत् तम् अपृच्छत्—कोऽसि इति ? (अहं वै वायुः अस्मि इति अब्रवीत्) सः अवदत्—अहं खलु वायुः अस्मि इति, (अहं वै मातरिश्वा अस्मि इति) अहं खलु मातरिश्वा अस्मि, सोऽस्मि यः वस्तूनां मातरि परिव्याप्तः इति ।

स तत् प्रति तीव्रवेगेन अगच्छत् । तत् तम् अपृच्छत् — कोऽसि इति ? सः अवदत् — "अहं खलु वायुः अस्मि इति, अहं खलु मातरिश्वा अस्मि, सोऽस्मि यः वस्तूनां मातरि परिव्याप्त इति ।"

तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वमाददीय यदिदं पृथिव्यामिति ॥९॥

(तस्मिन् त्वयि कि वीर्यम् इति ?) एतादृशे त्वयि का शक्तिः इति ? [सः अब्रवीत्] — (इदं सर्वम् आददीय) एतत् सर्वम् अहम् उड्डाय्य नेतु शक्नोमि, (यद् इद पृथिव्याम् इति) यत्किमपि अस्मिन् भूतले अस्ति तत्सर्वम् ।

एतादृशे त्वयि का शक्तिरस्ति ? सः अब्रवीत् — एतत् सर्वम् अहम् उड्डाय्य नेतुं शक्नोमि, यत्किमपि अस्मिन् भूतलेऽस्ति तत्सर्वम् ।

तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥१०॥

(तस्मै तृणं निदधौ) तत् तस्य सम्मुखे तृणं स्थापयामास [अवदच्च] (एतद् आदत्स्व इति) इदम् उड्डायय इति । (सर्वजवेन तद् उपप्रेयाय) स पूर्णवेगेन तत् प्रति अगच्छत् [किन्तु] (तद् आदातुं न शशाक) स तद् उड्डाययितुं न अशकत् । (सः ततः एव निववृते) स तत्रैव विरतः, तत एव प्रतिनिवृत्तः [अबव्रीत् च] — (एतद् विज्ञातु न अशकं यद् एतद् यक्षम् इति) अहं तद् ज्ञातुं न अशकं यद् एतद् यक्षम् इति ।

तत् तस्य सम्मुखे तृणं स्थापयामास अवदच्च — इदम् उड्डायय इति । स पूर्णवेगेन तत् प्रति अगच्छत् किन्तु उड्डाययितु न अशकत् । स तत्रैव विरतः, तत एव प्रतिनिवृत्य अवदच्च — "अहं तद् ज्ञातुं न अशकं यद् एतद् शक्तिशालि यक्षम् इति ।"

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत् तस्मात्तिरोदधे ॥११॥

(अथ इन्द्रम् अब्रुवन्) तदा ते इन्द्रम् अवदन्, (मघवन्, एतद् विजानीहि किम् एतद् यक्षम् इति) "हे मघवन्, हे ऐश्वर्यस्वामिन्, कोऽय शक्तिशाली देवः इति ज्ञानं प्राप्नुहि ।" [सोऽब्रवीत्] — (तथा इति) "तथास्तु" इति । (तद् अभ्यद्रवत्) स तत् प्रति तीव्रवेगेन अगच्छत् । (तस्मात् तिरोदधे) तत् तस्मात् तिरोहितम् ।

तदा ते इन्द्रमवदन् — "हे मघवन्, ऐश्वर्याणां स्वामिन्, कोऽयं शक्तिशाली देवः इति ज्ञानं प्राप्नुहि ।" सोऽब्रवीत् — "तथास्तु" इति । स तत् प्रति तीव्रवेगेन अगच्छत् । तत् तस्मात् तिरोहितम् ।

स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमा हैमवतीं तां होवाच किमेतद्यक्षमिति ॥१२॥

(तस्मिन् एव आकाशे) (सः बहुशोभमानां स्त्रियम्, हैमवतीम् उमाम् आजगाम) सः अनेकरूपैः उद्भासमाना दिव्यां स्त्रियम्, हिमवतः पुत्रीम् उमाम् उपगतः । (तां ह उवाच किम् एतद् यक्षम् इति) स ताम् अपृच्छत्, "अयं शक्तिशाली देवः कः आसीत् ?"

तस्मिन् एव आकाशे सः अनेकरूपैः उद्भासमानां दिव्यां स्त्रियम्, हिमवतः पुत्रीम् उमाम् उपगतः । स ताम् अपृच्छत्, "अयं शक्तिशाली देवः कः आसीत् ?"

# पत्राचारः

पूज्य जगन्नाथमहोदय,

प्रणामः । अद्यावधि अहं स्वीयकार्ये व्यापृतः आसम् । तस्मात् इतः पूर्वम् पत्रं प्रेषयितु न अशकम् । क्षमां प्रार्थये । लोकसंस्कृतपत्रिकायाः षष्ठवर्ष-तृतीयाङ्के प्रकाशितः स्वलेखः "संस्कृत-भाषाप्रचारः" मया दृष्टः । धन्यवादः ।

शोधनार्थम् "Tales of Ramakrishna" इति पुस्तकात् संस्कृते अनूदिता कथाः संलग्नाः । कृपया उचितं शीर्षकं ददातु । अहं कृतज्ञः भविष्यामि ।

सर्वेभ्य· मित्रेभ्य. मम दीपावलीदिने हार्दिकी शुभभावना नमस्काराः च निवेदनीयाः । सर्वत्र शान्तिः प्रतिष्ठापिता भवतु । लोकाः समस्ताः सुखिनः भवन्तु । सर्वे भद्राणि पश्यन्तु । पूज्यायाः श्रीमातुः चरणकमलयोः मम प्रणामाः ।

अनेन पत्रेण सह त्रिशतं रूप्यकाणि धनादेशद्वारा प्रेषयामि । संस्कृतभाषायाः पुनरुत्थानार्थम् उपयुक्तं स्यात् ।

वैन्कूवर, कनाडा — भवतः प्रियमित्रम्
८.१०.१९९० — जि. कृष्णन्

*

मान्यवर महोदय !

नवम्बरमासस्य (१९९०) पत्रिका (लोक-संस्कृतम्) मयाधीता । तत्र बालनाटिकास्तम्भे 'भस्मासुरम्' इति नाम्नैकं लघुनाटकं प्रकाशितम् । ननु पुलिङ्गवाचकः 'भस्मासुरः' कथमशुद्धः ? नो चेन्नाटकशब्देनैव संयोज्य लेखनीयमासीत् । जिज्ञासावशादेवं लिखितं मया नान्यथा गृह्णीयुः ।

अमृतसर — सादरं साभिवादनम्
४.१२.९० — शुकदेवशर्मा

श्रीमन्मान्यवर पाणिनिप्रिय सस्कृतप्रेमिविद्वन् !

वन्दे सप्रेम सादरम् । भवता 'काशिका'ग्रन्थे द्वे सूत्रे सविवृति (वृत्ति-उदाहरण-प्रत्युदाहरणादि-सहितम्) पठनीये बोध्ये च सम्यक् कस्मादपि वैयाकरणात् — "अधिकृत्य कृते ग्रन्थे ।। शिशुक्रन्द-यमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।। अष्टा० ४.३.८७-८८ ।।" लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम् इति वार्तिकम् (४.३.८७ सूत्रान्तर्गतम्) अपि सम्यक् पठनीयं बोध्यञ्च । सिद्धान्तकौमुद्यामपि अनयोः सूत्रयोः व्याख्यादिकं पठनीयं मननीयञ्च, विशेषतः, कुत्सित शरीरं शरीरकं तत्सम्बन्धी शारीरको जीवात्मा, तमधिकृत्य, प्रस्तुत्य कृतो ग्रन्थः शारीरकीयः," "शारीरकं भाष्यम्" इति त्वभेदोपचारात् ।

यदि भवतः पाणिनीये प्रवेशः नास्ति तर्हि 'रघुवंशः' इति वक्तव्ये 'रघुवंशम्' काव्यनाम, कुमारस्य सम्भवः कुमारसम्भवः इति वक्तव्ये कुमारस्य सम्भवं जन्म अधिकृत्य कृतं नाटकं कुमारसम्भवम् इत्यादि नपुंसकलिङ्गवाचकं ग्रन्थनाम यथा भवति तथा एव भस्मासुरम् इति नपुंसक-लिङ्गवाचि नाम इति बोध्यम् । आशास्ते कुशली श्रीमान् सर्वात्मना ।

१३.१२.९० — शुभाकाङ्क्षी
जगन्नाथः

*

मान्याः,

सादरं वन्दनानि । मासस्यास्य तृतीये दिनाङ्के अस्माकं निर्देशकः श्रीमान् अजितकुमारमहोदयः दिवङ्गतः । एतत्सम्बन्धिनी विस्तृता वार्ता एतेन

सह योजिता । एषा वार्ता भवतां पत्रिकाया प्रकाशनीया इति प्रार्थना ।

महतः खेदस्य अयं विषयः यत् हिन्दुसेवा-प्रतिष्ठानस्य निर्देशक. श्रीमान् अजितकुमारमहोदयः ३. १२. ९०दिनाङ्के मध्यरात्रे बेङ्गलूरु-तुमकूरु-मार्गे प्रवृत्ते कार्वाहनापघाते दिवं गतः । श्रीविजयेन्द्र-नरहरिः, श्रीनरेन्द्र., श्रीगणेशश्चेति त्रय· कार्यकर्तार· तेन सह आसन् । ते अपि तत्स्थले एव प्राणान् अत्यजन् ।

श्रीमान् अजितकुमारमहोदय. राष्ट्रिय-स्वयंसेवकसङ्घस्य प्रान्तप्रचारकः विविधाना संस्थानां मार्गदर्शकश्च सन् समाजसेवायाः विविधेषु क्षेत्रेषु अनितरसाधारणी सेवां कुर्वन् आसीत् । दशभ्यः वर्षेभ्यः पूर्वं तेन "हिन्दुसेवा-प्रतिष्ठानम्" प्रतिष्ठापितम् । प्रतिष्ठानद्वारा सः परस्सहस्रान् सेवाव्रतिनः सेवाव्रतिनीश्च हिन्दुसमाजस्य कार्ये नियोजितवान् । सर्वत्रापि प्रख्यातस्य संस्कृत-संभाषणान्दोलनस्य प्रेरकशक्तिः स एव आसीत् ।

सर्वेषु विषयेषु निष्कृष्टं चिन्तनम्, गभीरम् अध्ययनम् अमोघं कर्तृत्वं च अजितकुमारस्य विशिष्टाः गुणाः । 'अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः' इति हि आर्योक्ति· । 'योजक'-पदस्य प्रत्यक्षम् उदाहरणम् आसीत् सः ।

श्रीमत अजितकुमारमहोदयस्य अकालवियोगात् संस्कृतसंस्कृतिप्रेमिणा सर्वेषां हृदयं दु खपूर्णम् अस्ति । संस्कृतसेवासक्ताः आसन्, सन्ति भविष्यन्ति च बहव. । किन्तु अजितकुमारसदृशः न जातः, भवेत् न वा इत्यत्रापि सन्देह. ।

शङ्करपुरम्, बेङ्गलूरु भवदीयः
११. १२. ९० जनार्दनहेग्डे

---

भारतस्य देवालयाः

# सोमनाथमन्दिरम्

सोमनाथमन्दिरस्य ध्वंसावशेषाः "कालस्य आघातान् विध्वंसकारिणाम् आक्रमणानि च बहुशः सोढ्वा अद्यापि अवतिष्ठन्ते । जीर्णम्, अदृढम्, कलुषितम् इदं मन्दिरं सर्दार्पटेल्महोदयेन विनाशात् रक्षितम् । तस्य पुनर्निर्माणकर्मणि सः आत्मानं न्ययोजयत् । मन्दिररूपेण इदं बहूनि युगानि भारतस्य धार्मिकविश्वासस्य स्मारकम् आसीत् । अथ इदम् अस्मरणीय-दुर्भाग्यस्य प्रतीकरूपेण परित्यक्तम् अभवत् । नवयुगस्य अभ्युदयेन नूतनमन्दिरं ध्वंसावशेषात् अमरपक्षिवत् पुनरुत्थितम्" इति के. एम्. मुन्शीमहोदयः १९५०तमे ख्रिस्ताब्दे अलिखत् । तस्येदं वचनं तदा नूतनतात्पर्यम् अलभत यदा १९५१तमे ख्रिस्ताब्दे 'मे'मासस्य एकादशे दिनाङ्के भारतस्य तत्कालीनः राष्ट्रपतिः राजेन्द्रप्रसादमहोदयः सोमनाथाय उत्सृष्टस्य नूतनमन्दिरस्य उद्घाटनम् अकरोत् ।

के. एम्. मुन्शीमहोदयः लिखितवान् — "प्रभासस्थं सोमनाथमन्दिरं परम्परानुसारेण तथा प्राचीनं यथा इयं सृष्टिः । तत् प्रागैतिहासिकम् ।" स पुनः निरूपयति — "प्रभासक्षेत्रं परम्परया पवित्र-स्थानम् आसीत् । पाण्डुपुत्रस्य धर्मस्य कालेऽपि तत् तथैव अवर्तत । महाभारते तस्य पुनः पुनः उल्लेखः वर्तते । सरस्वतीनद्याः सागरसङ्गमस्थले अवस्थितम् इदं पवित्रस्थानम् अतिप्रसिद्धम् आसीत् ।"

सोमः चन्द्रस्य नाम । स दक्षस्य जामाता आसीत् । एकदा सोमः स्वश्वशुरस्य कमपि निर्देशं न अपालयत् । तेन क्रुद्ध दक्षः "क्षयं प्राप्नुहि" इति अभ्यशपत् ।

तावत्कालं प्रतिरात्रं पूर्णप्रभया उद्भासमानः चन्द्रः क्षेतुम् आरब्धः । किन्तु तस्य पूर्णक्षयात् पूर्वं देवाः शापनिवर्तनाय दक्षं प्रार्थयन्त । सरस्वती-नद्याः मुखे उदधौ स्नानं कृत्वा शिवम् आराधय इति दक्षः सोमम् आदिशत् ।

एव सोम. प्रभासम् आगत्य शिवम् अपूजयत् । अत एव प्रभासे शिव. सोमनाथनाम्ना प्रसिद्धः । इदं कथ्यते यत् तत. प्रभृति प्रत्येकस्याम् अमावास्यारात्रौ चन्द्रः प्रभाससमुद्रे स्नानं कर्तुम् आयाति । तत्परं स क्रमशः स्वकीयाम् अपहृतश्रियं पुनर् विन्दति ।

सोमनाथस्य प्रथममन्दिरं ख्रिस्ताब्दात् पूर्वं न चेत् तस्य प्रथमशतके निर्मितम् । षट्शतवर्षेभ्यः परं गुर्जरदेशस्य भागविशेषे चतुर्थ-धारसेनस्य राजत्वकाले पुरातनमन्दिरस्थाने नूतनमन्दिरं निर्मितम् अभवत् । किन्तु द्वितीयमन्दिरम् अधिककाल न अतिष्ठत् । इदं शत्रूणाम् आक्रमणेन विध्वस्तम् अथवा प्राकृतिकविपत्तिवशात् निर्माणदोषात् वा नष्टम् इति वयं न जानीमः । किन्तु नवमशताब्द्यां तृतीयवारं निर्मितं मन्दिरम् अधिकं प्रसिद्धम् अभवत् ।

मन्दिरं परितः वातावरण पवित्रं प्रशान्तं च आसीत् । अथ १०२६तमे ख्रिस्ताब्दे जॅनुअरि-मासस्य कस्मिन्नपि दिवसे गजनीराजः महमूदः आक्रमणम् अकरोत् । तादृशम् अप्रत्याशितम्, बर्बराक्रमणं तत्रत्यजनैः त्रीणि दिनानि प्रबलतया प्रतिरुद्धम् । पञ्चाशत्सहस्रं जनाः स्मारकस्य न चेत् देवविग्रहस्य रक्षार्थं वीरगतिम् अभजन्त । किन्तु महमूदः मन्दिरस्य लुण्ठने विनाशे च कृतकार्य. अभवत् । स विग्रहम् अपि व्यनाशयत् ।

अचिर तत्र नूतनमन्दिरं निर्मितम् । अनन्तरं तत्र पञ्च मन्दिराणि निर्मितानि । पञ्चमं मन्दिरं सुभव्यम् आसीत् । तत् राज्ञः कुमारपालस्य महाज्ञानिभक्तः भावबृहस्पतिः द्वादशशताब्द्यां निरमापयत् ।

शतं वर्षाणि यावत् मन्दिरमिदं धर्मस्य संस्कृतेश्च गवेषणाकेन्द्रम् अभूत् । अथ भाव-बृहस्पतिना श्रद्धातिशयेन निर्मितस्य विशाल-मन्दिरस्य विनाशाय अल्ला-उद्दीन्-खिल्जिः त्रयोदशशताब्द्याः अन्तिमभागे स्वसेनापतिम् अलफ्खान्नामानं प्रेषितवान् ।

जूनागढनृपतिना महीपालेन षष्ठवारं तत् मन्दिर पुनर्निर्मितम् । तस्य पुत्रः चतुर्दशशताब्द्याः प्रथमार्धे विग्रहस्य प्रतिष्ठापनम् अकरोत् ।

पञ्चदशशताब्द्यां गुर्जरदेशस्य युवशासकेन महमूदबेग्डाभिधानेन तन्मन्दिरम् अधिकृतम्, न तु नाशितम् । तेन विग्रहः स्थानान्तरं नीतः । कतिचिद्-वर्षेभ्यः परं तस्मिन् दुर्बले सञ्जाते विग्रहः आनीय पुनः स्थापितः ।

अष्टादशशताब्द्याः प्रारम्भे पुनरेकं जघन्यम् आक्रमणम् अभवत् । मन्दिरं धूलिसात् कुरु इति औरङ्गजेबः महम्मद्-अॅजाम्नामधेयं सेनापतिं निरदिशत् । अॅजाम् स्वकार्यं सम्यक् अकरोत् । किन्तु अष्टादशशताब्द्याः उत्तरार्धे इन्दोरराजमहिष्याः, धर्मपरायणायाः अहल्याबाईमहोदयायाः संरक्षणे तत् मन्दिरं पुन. रचितम् ।

भारतीयानां हृदयेषु सोमनाथमन्दिरं कियत् विशिष्टस्थानम् अभजत् कियच्च तैः तस्य कृते

कष्टसहनं कृतम् इति एतत् भारतम् आगताः आङ्ग्लजनाः अजानन् ।

१८४२तमे ख्रिस्ताब्दे एकदा भारतस्य राष्ट्रपतिः एड्वर्ड एलेन्वरोमहोदयः इमां विस्मयकरीं घोषणाम् अकरोत् —

"अफ्गानिस्थानं विजित्य अस्माकं विजयिसेना सोमनाथमन्दिरस्य उद्धारं कृतवती । सुल्तान्-महमूदस्य हृतश्रीः समाधिः गजनीध्वंसावशेषान् पश्यति ।

"अन्ततः अष्टशतवर्षाणाम् अपमानस्य प्रतिशोधः कृतः । एतावत्कालं भवताम् अपकीर्तेः स्मृतिरूपाणि सोमनाथमन्दिरस्य द्वाराणि भवतां राष्ट्रियगौरवस्य महनीयः अभिलेखः, सिन्धुपारवर्ति-राष्ट्रेषु भवतां सामरिकशक्तेः श्रेष्ठतायाः प्रमाणं च सञ्जातानि ।

"अयि सिर्हिन्द्-राज्वाडा-माल्वा-गुजरात-राज्यानां राजकुमाराः मुख्याधिकारिणश्च ! भवद्भ्यः अस्य सफलयुद्धस्य विजयोपहारं सादरम् अर्पयामि । भवन्तः पूर्णसम्मानेन सह चन्दनकाष्ठस्य द्वाराणि स्व-स्व-प्रदेशद्वारा पुनर्निर्मित-सोमनाथ-मन्दिराय प्रेषयेयुः ।"

माइकेल् एड्वर्ड्स् टिप्पणी करोति — "न केवलं घोषणायाः आडम्बरे अपि तु सोमनाथस्य द्वाराणां विषयेऽपि मिथ्योक्तिः वर्तते ।" यतो हि एक एव आङ्ग्लराज्यपालः स्थानीयस्वार्थस्य समर्थनं पृष्ठपोषणं च कृत्वा जनानां प्रीतिभाजनं भवितुम् अचेष्टत । किन्तु अनेके आङ्ग्लप्रशासकाः राज्ञ्या अहल्याबाईमहोदयया निर्मितस्य मन्दिरस्य दुर्गतये उत्तरदायिनः भवितुम् अर्हन्ति । मन्दिरस्य परिचालनार्थं नियुक्तः बडोदाजनपदस्य गाएक्वाड् बहुकालं यावत् मन्दिरसंस्कारकार्यात् निषिद्धः आसीत् ।

अथ १९४७तमे ख्रिस्ताब्दे, नॅवम्बरमासे, स्वाधीनतालाभात् परं भारतस्य उपप्रधानमन्त्री सर्दार्-वल्लभभाई-पटेलः सोमनाथमन्दिरं द्रष्टुम् आगतः । तत् संवत् २००४तम-वर्षस्य प्रथमदिनम् आसीत् । मन्दिरस्य सम्मुखे विशालजनसमुदायं संबोधयन् सः अवदत् — "नूतनवर्षस्य अस्मिन् पावनदिने सोमनाथमन्दिरस्य पुनर्निर्माणं भवतु इति अस्माभिः निर्णीतम् । भवन्तः सौराष्ट्रवासिनः यावच्छक्यं साहाय्यं कुर्वन्तु । अस्मिन् पुण्यकार्ये सर्वैः योगदानं कर्तव्यम् ।"

ऐतिहासिक-ध्वंसावशेषाणां मध्ये सोमनाथस्य नूतनमन्दिरम् अनश्वरविश्वासम् अभिव्यञ्जता सुस्मितेन विलसति ।

(श्रीमनोजदास-महोदयस्य Temples of India इति पुस्तकात् आशार्यया अनूदिता इयं कथा ।)

---

परमोच्च प्रभो सत्य नित्य त्वामेव केवलम् । अनुवर्तामहे सत्यम् अनु जीवाम केवलम् ॥

("साम्प्रतिक-सङ्कटात् उद्धारार्थं देशवासिभ्यः श्रीमातृप्रदत्त मन्त्रः ।" जून् १९७१)

# मनोमन्त्रमणिमाला

(विगताङ्कात् अनुवृत्ता)

याहि याहि प्रयाहि त्वं याहि याहि प्रयाहि च ।
यास्यसि यत्र यत्रापि तत्र द्रक्ष्याम्यहं प्रभुम् ॥२९॥

त्वं याहि, याहि, प्रयाहि, याहि, याहि, प्रयाहि च । त्वं यत्र यत्रापि यास्यसि तत्र अहं प्रभुं द्रक्ष्यामि ।

यत्र यत्रापि यायास्त्वं तत्र यास्याम्यहं सह ।
साक्षीभूतः समीक्षिष्ये चेष्टाः सर्वा अहं तव ॥३०॥

त्वं यत्र यत्रापि यायाः (गच्छेः) तत्र अहं सह यास्यामि । तव साक्षीभूतः अहं [तव] सर्वा. चेष्टाः समीक्षिष्ये ।

यावन्नो विरतं स्यास्त्वं भ्रमेर्भ्रमरवत् प्रिय ।
तावदेव भ्रमिष्यामि त्वया सार्धं हि तात मे ॥३१॥

हे प्रिय ! यावत् त्वं (भ्रमणात्) विरतं नो (न) स्याः (भवेः), भ्रमरवत् भ्रमेः, तावत् एव मे तात ! त्वया सार्धं हि भ्रमिष्यामि ।

वेद्मि चक्रं पदे तेऽस्ति भ्रमान्नान्या गतिस्तव ।
व्रजेर्यत्र ममापि स्युस्तत्र तत्र समाधयः ॥३२॥

[अहम्] वेद्मि [यत्] ते (तव) पदे चक्रम् (चक्रवत् घूर्णनमयी गतिः) अस्ति । भ्रमात् (भ्रमणात्) अन्या गतिः तव नास्ति । त्वं यत्र व्रजेः (गच्छेः) तत्र तत्र ममापि समाधयः (समाहितस्थितयः) स्युः (भवेयुः), मम समाहित-चित्तता भवेत् इति भावः ।

चक्रमेतत् तव ज्ञातमभ्यस्तं च निरन्तरम् ।
सन्ति चक्राणि चान्यानि यानि ज्ञेयानि बान्धव ॥३३॥

एतत् चक्रं (चक्रवत् घूर्णनम्) तव ज्ञातं निरन्तरम् अभ्यस्त च । हे बान्धव ! अन्यानि चक्राणि च (अपि) सन्ति यानि ज्ञेयानि ।

यत्र यत्र मनो याति तत्रेयात् साक्षिवत् सुधीः ।
तत्र तस्य समाधिः स्यात् तत्र तस्य परात्परम् ॥३४॥

यत्र यत्र मन. याति (गच्छति, भ्रमति) तत्र सुधीः (श्रेष्ठप्रज्ञासम्पन्नः) साक्षिवत् (द्रष्टा इव) इयात् (गच्छेत्) । तत्र तस्य समाधिः (समाहितावस्था) स्यात्, तत्र तस्य परात्परं स्यात् (साक्षात्कृतं भवेत्) ।

यावन्न त्वं भवेद् दृष्टं विश्लिष्टं चानुशीलितम् ।
द्रक्ष्यामि त्वामहं तावत् साक्षीभूतो हि सक्रियम् ॥३५॥

[हे मनः ! ] यावत् त्वं दृष्टं न भवेः (यावत् तव स्वरूपस्य ज्ञानं मम न भवेत्), विश्लिष्टं न भवेः (तव विश्लेषणं मया कृतं न भवेत्), अनुशीलितं न भवेः (तव सम्यक् विवेचनम् अनुष्ठितं न स्यात्) तावत् अहं साक्षीभूतः सक्रियं त्वां द्रक्ष्यामि हि (विलोकयिष्यामि एव) ।

—जगन्नाथः

## लोकसंस्कृतपत्रिकायाः स्वत्वाधिकारादेः विवरणम्


| | |
|---|---|
| प्रकाशनस्थानम् | श्रीअरविन्दाश्रमः, पुदुच्चेरी-६०५ ००२ |
| प्रकाशनकाल. | प्रतित्रिमासम् |
| प्रकाशकस्य नाम | हरिकान्त सी. पटेल. |
| राष्ट्रियता | भारतीय· |
| पत्रसङ्केतः | श्रीअरविन्दाश्रमः, पुदुच्चेरी-६०५ ००२ |
| मुद्रकस्य नाम | अमियरञ्जन गाङ्गुलिः |
| राष्ट्रियता | भारतीय. |
| पत्रसङ्केत. | श्रीअरविन्दाश्रम-मुद्रणालय., पुदुच्चेरी-६०५ ००२ |
| सम्पादकस्य नाम | जगन्नाथो वेदालङ्कार· |
| राष्ट्रियता | भारतीयः |
| पत्रसङ्केतः | श्रीअरविन्दाश्रमः, पुदुच्चेरी-६०५ ००२ |
| स्वत्वाधिकारिणः नाम | श्रीअरविन्दाश्रमन्यास |
| पत्रसङ्केत· | श्रीअरविन्दाश्रमः, पुदुच्चेरी-६०५ ००२ |

अहम्, हरिकान्त सी. पटेल., उद्घोषयामि यत् उपरि प्रकाशित विवरणं मज्ज्ञानानुसारेण पूर्णतया सत्यमिति ।

१५ ५. ९१ हरिकान्त सी. पटेलः